# संस्कृत-विमर्शः

(प्रथमभागः १९८६)

प्रधान संपादकः
डॉ॰ मण्डन मिश्रः, निदेशकः

संपादकः
पं॰ श्री संपन्नारायणाचार्यः
न्यायमीमांसा, वेदान्त विद्वान्
उपनिदेशकः



राष्ट्रिय संस्कृत संस्थानम्

# संस्कृत - विमर्शः

(राष्ट्रिय संस्कृत संस्थानस्य षाण्मासिकी शोध पत्रिका)

चतुर्दशः खण्डः — १९८६ — प्रथमभागः

प्रधान सम्पादकः
डा० मण्डन मिश्रः, निदेशकः

सम्पादकः
पं० श्री संपन्नारायणाचार्यः
न्याय, मीमांसा, वेदान्त विद्वान्, उपनिदेशकः




राष्ट्रिय संस्कृत संस्थानम्
राजा गार्डन नई दिल्ली २७
मूल्यम् पञ्चदशरूप्यकाणि

# विषयसूची

## संस्कृतम्

## ENGLISH

# कथासरित्सागरे रामकथा

—आचार्यः सूर्यनारायणः

वाल्मीकिरादिकविः । अस्य कृतिः रामायणमादिकाव्यमिति प्रसिद्धम् ।

कथासरित्सागरमिति कीर्तितं कथाकाव्यमपि रामकथानिबन्धनं करोति । कथासरित्सागरस्य नवमलम्बकस्य प्रथमतरङ्गे रामकथा प्रोक्ता । एषा कथा रामायणकथायाः भिद्यते । अस्मिन् व्यासे रामायणस्योत्तरकाण्डमधिकृत्य निवेदयामि ।

**सीतापवादः—**

महाराजः रामः एकदा परिमितपरिजनयुक्तः स्वराजधान्यामयोध्यायां चरति स्म । आत्मनः परिपालनमधिकृत्य प्रजाभिप्रायं स्वयमेव ज्ञातुमेषसंचारः । तस्मिन्नवसरे कश्चनकुटुम्बी आत्मीयां गृहिणीं कंठे गृहीत्वा गृहात् वहिरागतवान् । "त्वं परगृहवासदोषदूषिता त्वं कुलटा । अतस्त्वां गृहिणीति संम्भावयितुं नाहमलम्" इति उच्चैर्वदति स्म । तान्यतिपरुषाणि वाक्यानि श्रुत्वा,, दैन्यप्रतिरूपिणीमिव स्थितां तां वनितां च दृष्ट्वा सन्तप्तमनाः दाशरथिः तामेव पश्यन् सन्निहितोऽपि तैरदृष्टः स्थितः । तदा सा नारी "अहं निर्दोषा । मयि दोषारोपणमनुचितम् । परगृहवासदोष इति यः त्वया मय्यारोपितः स मर्षणीयः ! अतिदूरे लङ्कानगरे रक्षसां मध्ये वहूनि वासराण्यध्युषितां सीतां महाराजः रामः परिगृहीतवान् किल । किं त्वं महाराजादधिकतरः यतः मां त्यजसि, इत्युक्तवती ।

एतैर्वचनैः संतप्तो रामः प्रतिनिवृत्तः ।

**कुश लवयोर्जननम् —**

सीता दारकद्वयं प्रसूतवतीति वाल्मीकिरवोचत्। कथासरित्सागरे एकएव सुतः। लव इति वाल्मीकिः तस्य नाम चकार। समीपस्थितनद्यां स्नातुमनुदिनं सीता गच्छति स्म। तस्मिन्नवसरे सीता स्वकीयं सुतं आश्रमे त्यक्त्वा गच्छति स्म। एकस्मिन्नहनि सा लवेन साकं नदीमगात्। तस्मिन्नवसरे वनात् प्रतिनिवृत्तो वाल्मीकिरुटजे लवं न ददर्श। लवः वन्यमृगेण केनापि अपहृतो भवेदित्यचिंतयत्। भर्तृविरहिता सीता पुत्र शोकं कथं सहिष्यत इति महर्षेर्मनसि चिन्ता समजायत। ततो वाल्मीकिः ध्याननिमीलितनेत्रो भूत्वा स्वहस्तस्थितकुशेभ्यः एकं बालकमरचयत्। स बालः सर्वथा लवसदृशरूपवानासीत्। लवेन सह नद्याः प्रतिनिवृत्तासीता लवसमानाकारमपरं बालकमुटजे दृष्ट्वा विस्मितवती। कुशेभ्यः जातत्वात् स बालः कुश इति व्याहृतः।

**आश्रमे लवकुशयोर्वर्तनम्**

सूर्यवंशक्षत्रियौ लवकुशौ आश्रमवासिनावपि मुनिवृत्तिव्यतिरिक्तानि राजोचितानि कार्याण्याचरन्तावासताम्।

एष वृत्तान्तो न क्वचिदपि वाल्मीकिरामायणे दृश्यते। एकदा लवकुशौ आश्रममृगं जघ्नतुः। तस्य मृगस्य मांसं पक्वं भुक्तं च ताभ्याम्। महर्षिणा वाल्मीकिना या मूर्तिः अनुदिनमभिषेकादिभिः पूजिता सा तयोर्दारकयोः क्रीडाकंदुकतामगच्छत्। आश्रमविरोधीनि शतानि कृत्यानि महर्षेः संतापकारणान्यभवन्। एतयोर्बालकयोर्दौष्ट्यनिवारणाय महर्षिः लवं इत्थं आज्ञप्तवान्। "कुमार! लव! गच्छोत्तरदिशम्। तत्र कुबेरपालिते देशे रमणीयं सरः कच्चिदस्ति। तस्मिन् सरोवरे मनोहराणि कमलानि सन्ति। तान् मह्यं पूजार्थमाहर। कुबेरोद्यानवनात् कुसुमानि च उपाहर। युवाभ्यां कन्दुकीकृतशिवलिङ्गमेतैःपुष्पैरर्च्य पापविमोचनं करिष्यामीति।

इत्थमादिष्टः लवः कुबेरवनं गत्वा वनपालकान् हत्वा यथा निर्दिष्टं

पुष्पाण्यादाय आश्रमं प्रति प्रतस्थे। मार्गमध्ये प्रणयशीतले कच्चन तरोरधः विश्रान्तवान्। एतस्मिन्नेवावसरे रामानुजो लक्ष्मणः रामसंकल्पित नरमेघ-पशुभूतं पुरुषमन्विष्यन् तत्रागतः। लवः तेन योद्धुमना बभूव। तस्मिन् योधने सम्मोहितो लवः लक्ष्मणेन अयोध्यानगरीं नीतः। एतं वृत्तान्तं सर्वं वाल्मीकिः दिव्येन चक्षुषा जज्ञे। लवानयनाय वाल्मीकिः कुशं प्रेषितवान्। कुशः सत्वरमयोध्याभिमुखो प्रतस्थ अयोध्यां प्राप्य यज्ञवाटं अरौत्सीत्। यज्ञविध्वंसकं कुशं प्रशास्तुं रामः धनुष्पाणिरगच्छत्। तदा कुशरामयोः अतिसंकुलं युद्धमभूत्। तस्मिन्नायोधने रामः कुशेन पराजितः। ततो रामः कुशागमनकारणं प्रपच्छ। कुशः स्वाग्रजं लवं विमोचयितुमागतवानस्मीत्य-कथयत्। तस्मिन् समये कुशलवौ यमलौ स्वपुत्राविति विज्ञातवान रामः।

ततः स्वपुत्रौ रामः प्रीतिपूर्वं स्वीचकार। सीताऽपि तत्र आगत्य स्व-भर्तारं पुत्रसहितं युयुजे।

एषा कथा रामायणकथायाः अन्येति सुस्पष्टम्। जानपदेषु प्राचुर्य-भूतां एतां कथां कथासरित्सागरस्य कर्ता ग्रन्थस्थामकरोत्।

अत इदं वक्तुं शक्यते यत् संस्कृतकाव्येषु जानपदकथावाङ्मयस्य प्रभावः दरीदृश्यत इति।

॥ श्रीहरिः ॥

# माघस्यानुप्रासालंकारयोजना

—डा० नन्दकिशोर गौतमः (उपाध्यायः) 'निर्मलः'
एम. ए., पी. एच. डी., साहित्यायुर्वेदाचार्यः, साहित्यायुर्वेदरत्नम्।
प्राचार्यः-राजकीय दरबारशास्त्री संस्कृतमहाविद्यालयः योधपुरम्।

अनुप्रासः शाब्दिकालंकारोऽस्ति। अस्य शाब्दिकोऽर्थो वर्तते 'रसभावयोरानुकूल्येन सदृशवर्णानामव्यवहित-विन्यासोऽनुप्रासः' इति। स्वराभावेऽपि अलंकारोऽयं जायते तस्मात् काव्यप्रकाशकारेणोक्तम् 'वर्णसाम्यमनुप्रासः यावद्धि साहित्यदर्पणकारः स्पष्टं कुर्वन् कथयति 'अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत्' इति।

**अनुप्रासप्रकाराः**—सारत्वेन अनुप्रासालंकारस्य छेकानुप्रासः, वृत्यनुप्रासः, लाटानुप्रासः, श्रुत्यनुप्रासश्चेति भेदचतुष्टयमेव विद्वद्भिर्गण्यते।

इदानीं वयं भेदं भेदमादाय विलोकयिष्यामो यत् कुत्र कुत्र कथं कस्य कस्य वा भेदस्य योजना माघेन स्वकीये 'शिशुपालवधम्' इति महाकाव्ये विहिता।

**छेकानुप्रासः**—अनेकेषां व्यञ्जनानां सकृत् साम्यं छेकानुप्रासो यथा काव्यप्रकाशकारेणाभिहितम् 'सोऽनेकस्य सकृत्पूर्वः'। साहित्यदर्पणकार उपरितनसूत्रस्य व्याख्यां विदधत् भणति 'छेको व्यञ्जनसंघस्य सकृत्साम्यमनेकधा'।

अलंकारेऽस्मिन् छेकजनाः (विदग्धाः) व्यञ्जनराशिम् एकधा एव साम्येन प्रदर्शयन्ति तस्मादयं 'छेकानुप्रासः' इति प्रोच्यते।

कथं माघेन कस्मिन् कस्मिन् सर्गे कं कं प्रसङ्गं समादाय छेकानुप्रासस्य योजना समायोजिता इति समासतः प्रस्तूयते—

श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेव-सद्मनि ।
वसन्ददर्शावतरन्तमम्बराद्धिरण्यगर्भाङ्गभुवं मुनिः हरिः ॥ (१।१)

अत्र तकारसकारयोः सकृदावृत्या 'जगज्जगदिति' 'वसन्ददर्शावतरन्तम्' इति च व्यञ्जनद्वय सादृश्यात् छेकवृत्यनुप्रासभेदौ शब्दालंकारौ स्तः।

निवृर्त्य सोऽनुव्रजतः कृतानतीनतीन्द्रिय ज्ञाननिधिर्नभः-सदः ।
समासदत्सादितदैत्यसंपदः पदं महेन्द्रालयचारुचक्रिणः ॥
(१।११)

अत्र 'नतानती', पदःपदमिति च द्वयोर्व्यञ्जनयुग्मयोः सकृदावृत्या छेकानुप्रासः ।

अनन्य-गुर्वास्तव केन केवलः पुराणमूर्तेर्महिमावगम्यते ।
मनुष्यजन्मापि सुरासुरान्गुणैर्भवान्भवच्छेदकरैः करोत्यधः ॥
(१।३५)

अत्र द्वितीयार्धे 'सुरासुरानिति' भवान्भवच्छेदकरैश्च' इति सकृत् व्यञ्जनावृत्या छेकानुप्रासः ।

इति विशकलितार्थामौद्धवीं वाचमेना-
-मनुगतनयमार्गामर्गलां दुर्नयस्य ।
जनितमुदमुदस्था दुच्चकैरुच्छ्रितोरः
स्थलनियतनिषण्ण श्री श्रुतां शुश्रुवान् सः ॥
(२।११८)

अत्र 'मार्गामर्गलाम्' 'मुदमुदस्था' इत्यत्र सकृत् व्यञ्जनावृत्या छेकानुप्रासालंकारः ।

उत्तालतालीवनसम्प्रवृत्तसमीरसीमन्तितकेतकीकाः ।
आसादिरे लावणसैन्धवीनां चमूचरैः कच्छभुवां प्रदेशाः ॥
(३।८०)

अत्र 'उत्तालतालीवन' 'समीरसीमन्तित' 'चमूचरैः' इति सकृत्व्यञ्जनावृत्या छेकानुप्रासः।

**वृत्यनुप्रासः**—अनुप्रासेऽस्मिन् वर्णस्य वर्णानाञ्च असकृदावृत्तिर्जायते। तस्मादेव कारणात् अलंकारोऽयं 'वृत्यनुप्रासः' इति कथ्यते।

यथा काव्यप्रकाशकारो लक्षणं प्रस्तौति—

'एकस्यासकृत्परः'

एकस्यापि वर्णस्य (अनेकेषां वर्णानाञ्च) यत्र अनेकधा आवृत्तिर्जायते तत्रायमलंकारो भवति। दर्पणकारस्तथैव व्याख्यां कुर्वन् निगदति—

'अनेकस्यैकधा साम्यमसकृद्वाप्यनेकधा।
एकस्य सकृदप्येष वृत्यनुप्रास उच्यते॥

यस्मिन्ननुप्रासालंकारेऽनेकेषां व्यञ्जनानां केवलं स्वरूपतः समानता, अनेकेषां व्यञ्जनानां वा स्वरूपतः क्रमतश्च समानता उत वा वर्णस्य एकधानेकधा च समानता भवति तत्र वृत्यनुप्रासालंकारो जायते।

इदानीमिदं प्रदर्श्यते यत् कथं कुत्र च माघेन अलंकारस्यास्य प्रयोगो विहितः।

फलद्भिरुष्णांशुकराभिमर्शात् कार्शानवं धामपतङ्गकान्तैः।
शशंस यः पात्रगुणाद् गुणानां संक्रान्तिमाक्रान्तगुणातिरेकाम्॥
(४।१६)

पद्येऽस्मिन् शकारस्य, ककारस्य, तकारस्य, रेफस्य च वर्णानाम्, एकधानेकधा च आवृत्तिर्जाता। तस्मादत्र वृत्यनुप्रासोऽलंकारः।

अनुकृतशिखरौघश्रीभिरभ्यागतेऽसौ
त्वयि सरभसमभ्युत्तिष्ठतीवादिरुच्चैः।
द्रुतमरुदुपनुन्नैरुन्नमद्भिः सहेलं
हलधरपरिधानश्यामलैरम्बुवाहैः॥

(४।६८)

पद्येऽस्मिन् शब्दवृत्त्यनुप्रासो राजते।

मधुरया मधुबोधितमाधवीमधुसमृद्धि समेधितमेधया।
मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे॥
(६।२०)

माघस्य प्रसिद्धे पद्येऽस्मिन् वृत्यनुप्रासछटातीव शोभते।

श्रुतिसमधिकमुच्चैः पञ्चमं पीडयन्तः
सततमृषभहीनं भिन्नकीकृत्य षड्जम्।
प्रणिजगदुरकाकुश्रावकस्निग्धकण्ठाः
परिणतिमिति रात्रेर्मागधा माधवाय॥
(११।१)

स्पष्ट एवात्र वृत्यनुप्रासः।

गतमनुगतवीणैरेकतां वेणुनादैः, कमलविकलतालं गायकैर्बोधहेतोः।
असकृदनवगीतं गीतमाकर्णयन्तः सुखमुकुलितनेत्रा यान्ति निद्रां नरेन्द्राः
(११।१०)

अत्रापि वृत्यनुप्रासः सारल्येन ज्ञायते।

विकचकमलगन्धैरन्धयन्भृङ्गमालाः
सुरभितमकरन्दं मन्दमावाति वातः।
प्रमदमदनमाद्यद्यौवनोद्दामरामा-
रमणरभसखेद स्वेदविच्छेददक्षः॥ (११।१९)

स्पष्ट एवात्र वृत्यनुप्रासोऽलंकारः।

प्रतिशरणमशीर्ण ज्योतिरग्न्याहितानां
विधिविहितविरिब्धैः सामिधेनीरधीत्य।
कृतगुरुदुरितौघध्वंसमध्वर्युवर्यै-
र्हुतमयमुपलीढे साधु साम्नाय्यमग्निः॥
(११।४१)

अत्रापि वृत्यनुप्रासालंकारः स्पष्ट एव ।

शैलाधिरोहाभ्यसनाधिकोद्धुरैः,
पयोधरैरामलकी वनाश्रिताः ।
तं पर्वतीयप्रमदाश्चचायिरे,
विकासविस्फारितविभ्रमेक्षणाः ॥

(१२।५)

शोभनात्र स्वभावोक्तिवृत्यनुप्रासयोः संसृष्टिः ।

व्यचलन्विशङ्कटकटीरकस्थली,
शिखरस्खलन्मुखरमेखलाकुलाः ।
भवनानि तुङ्गतपनीयसंक्रमक्रमण,
क्वणन्कनकनूपुराः स्त्रियः ॥

(१३।३४)

अत्रापि वृत्यनुप्रासस्य शोभा दरीदृश्यते ।

तं जगाद गिरमुद्गिरन्निव स्नेहमाहित-विकासया दृशा ।
यज्ञकर्मणि मनः समादधद्वाग्विदां वरमकद्वदो नृपः ॥

(१४।१)

अत्रोत्प्रेक्षा वृत्यनुप्रासयोः संसृष्टिर्दर्शनीयास्ति ।

सप्तभेदकरकल्पितस्वरं साम सामविदसङ्गमुज्जगौ ।
तत्र सूनृतगिरश्च सूरयः पुण्यमृग्यजुषमध्यगीषत ॥

(१४।२१)

अत्र 'सामसामेत्यादौ' वृत्यनुप्रासभेदौ द्रष्टव्यौ ।

दक्षिणीयमवगम्य पङ्क्तिशः पङ्क्तिपावनमथ द्विजव्रजम् ।
दक्षिणः क्षितिपतिर्व्यशिक्षणद्दक्षिणाः सदसि राजसूयकी ॥

(१४।३३)

अत्र स्पष्ट एवाभाति वृत्यतुप्रासः ।

इत्थमत्र विततक्रमे क्रतौ वीक्ष्य धर्ममथ धर्मजन्मना ।
अर्घदानमनुचोदितो वचः सभ्यमभ्यधितशन्तनोः सुतः ॥

(१४।५३)

दर्शनीयात्र शोभा वृत्त्यनुप्रासालंकारस्य ।

पूर्वमेष किल सृष्टवानपस्तासु वीर्यमनिवार्यमादधौ ।
तच्च कारणमभूद्धिरण्मयं ब्रह्मणोऽसृजदसाविदं जगत् ॥

(१४।६७)

अत्र वीर्यमनिवार्यमिति वृत्त्यनुप्रासः ।

शकटव्युदासतरुभङ्गधरणिधरधारणादिकम् ।
कर्म यदयमकोत्तरलः स्थिरचेतसां क इव तेनविस्मयः ॥

(१५।३७)

अत्र स्थिरचेतस्कताया विशेषणगत्या विस्मयनिषेधहेतुत्वात्काव्य-लिङ्ग-वृत्त्यनुप्रासेन संसृज्यते ।

सलिलार्द्रवराहदेहनीलो विदधद्भास्करमर्यशून्य संज्ञम् ।
प्रचलायतलोचनारविन्दं विदधे तद्बलमन्धमन्धकारः ॥

(२०।३३)

अत्रान्धमन्धेति सकृद् व्यञ्जनयुग्मपौनरुक्त्वाद् वृत्यनुप्रासभेदः ।

जजौ जोजा जिजिञ्जाजी तं ततोऽपि ततातितुत् ।
भाभोऽभीभामिभूभाभूरारारिररिरीररः ॥

(१९।३)

अत्र भिन्नाक्षरपादाख्योऽनुप्रासभेदो दर्शनीयोऽस्ति ।

भूरिभिर्भारिभिर्भीरैर्भूभारैरभिरेभिरे ।
भेरीरेभिभिरभ्राभैरभीरूभिरिभैरिभाः ॥

(१९।३६)

दर्शनीयोऽत्र द्वयक्षरानुप्रासः । एवमेव सर्गेऽस्मिन् चतुरशीति (८४) षडशीति (८६) चतुर्णवति (९५) अष्टानवति (९८) शतं (१००) द्वय्धिक-शतं (१०२) चतुरधिकशतम् (१०४) षडधिकशतं (१०६) अष्टाधिकशतं (१०८) चेति वहुपद्येष्वपि द्वय्क्षरानुप्रास उपलभ्यते ।

॥ इति ॥

# वैदिकयुगीनभारतस्य भौगोलिकस्थितिः

—डॉ० कैलाश नाथ द्विवेदी, डी० लिट्०

वेदाः विश्वविश्रुतभारतस्य पुरातनसंस्कृतेः पावनतमाः स्मारकाः येषु निखिलधर्मदर्शनकलेतिहासभूगोलादिविविध ज्ञानविज्ञान-पूर्णविषयाणां सम्यक् सन्निवेशोऽस्ति। प्रस्तुते संक्षिप्ते शोधलेखे वैदिकयुगीन भारतस्य भौगोलिक स्थितिः सोदाहरणं विविच्यते।

प्रारम्भिके वैदिकयुगे भारतस्य भौगोलिकविस्तारः मध्यदेशीया-समुद्रहिमवन्तपर्यन्तमासीत्, यस्मिन् मूजवच्छर्यणावत् हिमवन्तार्बुदप्रभृति-पर्वताः, त्रिधन्वयोजना, सिन्धुसरस्वतीसदृशसप्त सिन्धवो विशेषरूपेण उल्लेखनीयाः सन्ति।

**यथा—"अष्टौ व्यख्यत् ककुभः पृथिव्यास्त्री धन्वयोजना सप्तसिन्धून्।**

ऋक्० १।३५।८

**"यस्येमे हिमवन्तो महित्वा यस्य समुद्रं रसया सहाहुः।**

ऋक्० १०।१२१।४

**"न त्वा बृहन्तो अद्रयो वरन्त इन्द्र वीलवः।** ऋ० ८/७७/३

**दवः पृथिव्योरव आवृणीमहे मातृन् सिन्धून् पर्वतान्छर्यणावतः।**

ऋक्० १०।३५।२

यद्यपि सप्त सिन्धूनां प्रदेशस्य पश्चिमोत्तरभूभागे प्राधान्यमासीत् तथापि नानानदनदीनामपि वर्णनमत्यन्तं महत्त्वपूर्णमस्ति। यथा—

**"इमं मे गंगे यमुने सरस्वति शुतुद्रि स्तोमं सचतापरुष्ण्या।**
**असिक्न्या मरुद्वृधे वितस्तयार्जीकीये श्रुणुह्या सुषोमया॥**

**तृष्टामया प्रथमं यातवे सजूः सुसर्त्वा रसया श्वेत्या त्या ।**
**त्वं सिन्धो कुभया गोमतीं क्रुमुं मेहत्न्वा सरथं याभिरीयसे ॥"**

ऋक्० १०।७५।५, ६

वैदिककालीनभारते सप्तसिन्धुप्रदेशे सीमान्तपरावत् अर्वावत् सारस्वत्—शर्यणावतसदृश चतुः समुद्राणामवस्थितौ सति द्वयोः समुद्रयोरेव प्राधान्यमासीत् । यथा—

**"उभौ समुद्रावा क्षेति यश्च पूर्व उतापरः ।"** ऋक्० १।१३६।

**"परावति अर्वावति समुद्रे……।"** ऋक्० १।१८२।५

परवर्तिशतपथैतरेयब्राह्मणादि ग्रन्थेष्वप्यनयोरुल्लेखो विद्यते ।

प्रतीयते, प्रारम्भिके वैदिककालीने भूभागे भूकम्पादिप्राकृतिकशक्तिभिः प्रभूतं परिवर्तनं बभूव—(पर्वतश्रृंगाणां भ्रंशनम्, समुद्रनदीतलानामुन्मज्जनञ्च) । यस्य संकेतः न केवलं ऋग्वेदस्य द्वितीयमण्डले—**यः पृथिवीं व्यथमानामदृंहद् यः पर्वतान् प्रकुपितानरम्णात् ? ।"** अपितु ताण्ड्यजैमिनीयब्राह्मणग्रन्थयोः सरस्वत्याः विलोपप्रादुर्भावयोरुल्लेखः[2] विनशनप्लक्षरूपयोः प्राप्यते । श्री वी० वी० केतकर[3] महोदयेन भूगर्भविज्ञानानुसारं राजस्थान क्षेत्रस्य समुद्रगर्भात् प्राकट्यं ईस्वीपूर्वसार्द्ध सप्तसहस्रवर्षपूर्वमनुमानितम् । अथर्ववेदकाले तु परावत्-अर्वावत्-समुद्र मध्यवर्ति क्षेत्रे स्थलोन्मेषे सति सप्तसिन्धु प्रदेशस्य पूर्वीय भूभागे मगधांगादि राज्यानां संस्थापना बभूव, येषु सोमपार्य्याणां यदुतुर्वशानुद्रुह्यु पुरुतृत्सु प्रभृतिजनानां राज्यविस्तार आसीत्, येषामुल्लेखोऽनेकेषु स्थलेषु विद्यते । यथा—

---

१. ऋग्वेदे, २।१५।६

२. ताण्ड्य ब्राह्मणे २५।१०।१, १६ जैमिनि ब्राह्मणे २।२, ९७

३. प्रथम प्राच्यविद्या सम्मेलनम्, १९१९, पुणे (1st Sessien A. i. O. C. Pune)

"यदिन्द्राग्नी यदुषु तुर्वशेषु यद् द्रुह्यु ष्वनुसु पूरुषु स्थः ।
अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥"

ऋक्० १०।१०८।८

असुर-दानव-दास-दस्युपणिप्रभृतिपर्वतीयकृष्णानार्यजनानामिव पश्चिमी सीमान्तप्रदेशोयाः पक्थभलानसशिवालिन् विषाणिन् जना अपि आर्याणाममित्राण्यासन्, येषामुल्लेखोऽप्यनेकमंत्रेषु प्राप्यते । यथा—

"अकर्मा दस्युरभि वो अमन्तुरन्यव्रतो अमानुषः ।
त्वं तस्यामित्रहन् वधर्दासस्य दम्भय ॥

ऋक्० १०।२२।८

"अपक्थासो भलानसो भनन्तालिनासो विषाणिनः शिवासः ।
आ यो नयत्सधमा आर्यस्य गत्या तृत्सुभ्यो अजगन्युधा नृन् ॥"

ऋक्० ७।१

अधि वृबुः पणीनां वर्षिष्ठे मूर्धन्नस्थात् । उरुः कक्ष्यो न गांग्यः ॥

ऋक्० ४५

सामान्यतः समशीतोष्णजलवायुप्रभावितैः ऋषीणां पर्जन्य सदृशसूक्तैः प्रभूतवर्षायाः शोभनं वर्णनं वर्तते । यथा—

"प्रवाता वान्ति पतयन्ति विद्युत् उदोषधी जिहृते पिन्वते स्वः ।"
"अवर्षीर्वर्षमुदुषु गृभायाकर्ं धन्वान्यत्येतवा ।"

(ऋक्० ५।८३।४, १०)

पर्याप्तवर्षया सदा हरितसघनवनानामप्यधिकताऽऽसीत्, किन्तु कयं-कयाँ दीर्घ शीततौ सामान्यतः हिमपातेन वनद्रुमाणां पणान्यपि विनष्टानि भवन्ति स्म ।

"हिमेव पर्णा मुषिता वनानि वृहस्पतिनाकृपयद्वलो गाः ॥"

ऋक्० १०।६८।१०

यद्यपि वैदिकयुगे वनानि मानवाजीविकाया आधारभूतानि साधनानि आ न्, येषु धेन्वजाविकाश्वादीनां पशुपालनम्, आखेटकाष्टाद्युयोगाः

प्राधान्येन प्रचेलुः, तथापि कृषिकार्येऽपि कर्मशीलार्याणामभिरुचिर्न्यूना नासीत्। द्यूतादिदुर्व्यसनेभ्यो दूरीकृत्य सामाजिकसमृद्ध्यै मंगलकामनायै च कृषिं प्रति ध्यानाकर्षणं कृत्वा वैदिक ऋषिः कथयति—

"अक्षैर्मा दीव्यः कृषिमित् कृषस्व वित्ते रमस्व बहुमन्यमानः।
तत्र गावः कितवः तत्र जाया तन्मे विचष्टे सवितायमर्यः॥"

ऋक्० १०।३४।१२

"शुनं नः फालाः विकृषन्तु भूमिं शुनं कीनाशा अभियान्तु वाहैः।
शुनं पर्जन्यो मधुना पयोभिः शुनासीरा शुनमस्मासु धत्तम्॥

ऋक्० ४।५७।८

कृषिसम्बन्धिसन्दर्भे तैत्तिरीय[१]संहितायामपि ऋत्वनुकूलं यवव्रीहि प्रभृतिधान्यानां वपनपरिपाकयोरुल्लेखो विद्यते। कृषिविषयकविविधानां क्रियाणामपि वर्णनं वर्तते परवर्ति वैदिक साहित्ये। यथा शतपथ ब्राह्मणे—

"कृषन्त वपन्तः लुनन्तः मृणन्तः।

(—शत० १।६।१।३)

सामान्यतः शीतर्तोः शस्यं चैत्रमासे[२] पचति स्म। तद्युगीन परिवारे श्रमपूर्ण जीविकायां वैविध्यमपि वर्तते। यथा—

"कारुरहं ततो भिषगुपलप्रक्षिणी नना।
नानाधियो वसूयतोऽनुगा इव तस्थिमेन्द्रायेन्दो परिस्रव॥

ऋक्० ९।११२।३

बहूद्योगिनो वैदिकार्याः ऊर्णिकार्पासिकस्यूत व्युत वस्त्रैः, पौष्टिकान्नपानेन ग्रीष्मशीतवर्षात्राणकारिगृहावासेन च रुक्मवक्षाः मणिग्रीवाः हिरण्यकर्णाश्च भूत्वा सुखेन जीवनं यापयामासुः। तत्कालीन गृहनिर्माण कलाऽपि ईदृश्युत्कर्षपूर्णा जलवाय्वनुकूला चासीत् यत् सहस्रस्तम्भमयदीर्घगृहाणां निर्माणमभूत्—

१. तैत्ति० संहितायाम्-७।२।१०।२।
२. कौषीतकिब्राह्मणे-१९।३

"सहस्रस्थूणं विभृथः सह द्वौ...।"

ऋक्० ५।६२।६

वैदिकयुगीना राज्य व्यवस्था कुलपग्रामणीव्राजपतिविश्पतिराजादिभिः कुलग्रामव्रजपुरविश्जनराष्ट्रादिविविधरूपेषु संविभाज्य सम्यग्रूपेण संचाल्यते स्म । व्यापकप्राशासनिकप्रभुसत्तादृष्ट्या राष्ट्रे 'सम्राट्, एकराट्' पदधारिणः राजानः सेनापति-पुरोहित (प्रधानमंत्रिणाम्) प्रभृत्यधिकारिणां साहाय्येन सभा-समिति सदृशलोकतंत्रात्मकप्रणाल्या प्राशासन्; परन्तु पारस्परिक-सामयिक-राजनैतिक-सामाजिक-धार्मिक-मतभेदैः युद्धा अप्यनिवार्याः भवन्ति स्म, येषु युद्धेषु विविधशस्त्रास्त्र प्रयोगेन सह सांग्रामिककूटनीतेः, प्राकृतिकशक्तीनां भौगोलिक कारकानां (नदीप्रवाहपर्वतावरोधभयंकरवृष्टि प्रभृतीनामपि) प्रत्यक्षं प्रभावः परिलक्ष्यते । राजा दिवोदासकाले पर्वतीयप्रदेशे सम्पन्नः आर्यानार्ययुद्धस्तत्सुराज सुदास समये जलप्रवाहपूर्णपरुष्णीतटे दाशराज्ञयुद्धश्च तथ्यमिमं प्रमाणयतः ।

प्रायः परुष्णीवितस्तासरस्वत्यादिनदीनां सुरम्यतटेषु भरद्वाजवशिष्ठ विश्वामित्र वामदेवजमदग्निकण्वादिमुनीनामाश्रमाः आसन्, येषु धर्मदर्शनकलाज्ञानविज्ञानानां पराकाष्ठां प्राप्य वैदिकसंस्कृतेः समुज्ज्वला, शाश्वती, सार्वभौमिकी च समृद्धिरधिगताऽऽसीत् । सूर्याग्निवायुपर्जन्य वरुणपृथ्वीन्द्रादिप्राकृतिकशक्तीनामुपासना, हवनपंचमहायज्ञसंस्काराश्रमपुरुषार्थादीनां व्यवस्था धर्मदर्शनयोराध्यात्मिकता कर्मवादिताशावादिता मोक्षादींनामवधारणा ऋषीणामार्याणां च राष्ट्रियसांस्कृतिकैकतायाः समुपलब्धये एका महती संसिद्धिरासीत् ।

वैदिकयुगीन सांस्कृतिकोत्कर्षज्ञानाय महर्षिभरद्वाजवशिष्ठयोः यौद्धिकवर्णनपूर्णसैन्यविज्ञानसम्बन्धिमंत्राः, कृषिविकास सम्बन्धिनो वामदेवस्य मंत्राः, ज्योतिषविषयका अत्रिमुनेर्मंत्राः, वनस्पतिजीवविज्ञान विषयका, अगस्त्यस्य मंत्राः, भौगोलिकज्ञानाय श्यावाश्वस्य मंत्राश्च महत्त्वपूर्णाः सन्ति ।

वैदिक सप्तसैन्धवप्रदेशीयानाँ पावनसप्तनदीनामखण्डभावात्मकैकतासंवर्धनाय न केवलं तद्युगीनार्यावर्ते मध्यदेशे वाऽपितु समग्रे भारतेऽपि महत्त्वमासीत्। अद्यापि प्रत्येकः श्रद्धालुः भारतीयः पुरातन सांस्कृतिकैतिहासिकधार्मिकभावाभिभूतो भूत्वाऽऽसां पावनं राष्ट्रव्यापि स्वरूपस्य स्मरणं स्नानसमये करोत्येव—

**"गंगश्च जमुनश्च गोदावरी सरस्वती।**
**नर्मदा सिन्धुकावेरी जलेऽस्मिन् सन्निधिं कुरु"**

परमप्रतापि तृत्सूनां (पुरुःकुरु भरतानां) वैदिकयुगे या यज्ञियसंस्कृतिः 'भारती' प्रादुर्भूय सांस्कृतिक समृद्धिं विजयञ्चाधिगत्य कालान्तरेऽस्य राष्ट्रस्य नामकरणेऽपि आधारवती बभूव। पुरुवंशिदौष्यन्तेः भरतस्य प्रतापमहिमा न केवलं शतपथब्राह्मणे (१३।५।३।१३) वर्णितोऽस्ति, प्रत्युत निरुक्ताधारेण मनुपरम्परया ऋषभपुत्र+भरतस्याऽपि वर्णनं विद्यते पुराण ग्रन्थेषु ?—

**"भरणात् प्रजानां चैव मनुर्भरत उच्यते।**
**निरुक्तवचनाच्चैव वर्षं तद् भारतं स्मृतम्।"**

(वायु० ४५।७६, मत्स्यपुराणे ११४।५-६)

अस्याः यज्ञियभारतीसंस्कृतेः संरक्षणं सम्प्रसारणञ्च मनीषीभिर्मुनिभिः, मनस्विभिरार्यैः सततं न केवलं स्वदेशेऽपितु शतारित्रमयनौकाभिः समुद्रं तीर्त्वाऽन्यदेशेषु द्वीपान्तरेष्वपि परिभ्रम्य कृतम्। अस्य संकेतः ऋग्वेदेऽनेकस्थलेषु वर्तते। यथा—

**"अनारम्भणे···अग्रभणे समुद्रे···शतारित्रां नावमातस्थिवांसम्।"**

ऋक्० १।११६।५

**"प्रयत्समुद्रमतिशूरपर्षिपारया ··तुर्वशं यदुं स्वस्ति।"**

ऋक्० १।१७४।९

---

+१. वायुपुराणे-३३।५१,५२ मार्कण्डेयपुराणे-५३।३९,४०

"वि द्विपानि पापतन्तिष्ठद्द दुच्छुनो मे ॥—

ऋक्० ८।२०।४

साम्प्रतमपि वैदिक भारती संस्कृतेः स्वदेशे ईरानेराकवेबिलोनिया-सोरियाहिन्देशियादिदेशेषु च पुरातनावशेषा; बाहुल्येन प्राप्यन्ते। अस्माभिः स्वदेशानुरागिभिस्तस्याः गौरवसंरक्षणार्थमादर्शानामनुकरणार्थञ्च राष्ट्रिय सांस्कृतिकैकतायै सततं सदाचरणीयम्। इति शम्।

# ऋग्वैदिकभूगोलसमीक्षणम्

—डॉ० प्रतिभा रानी, आगरा

प्राच्य विद्यायाः प्रशस्तक्षत्रेऽद्यतनीनमहत्त्वपूर्णेषु प्रकाशितेषु ग्रन्थेषु "कालिदास की कृतियों में भौगोलिक स्थलों का प्रत्यभिज्ञान" इति ग्रन्थानन्तरं "ऋग्वैदिक भूगोल" इति शीर्षाङ्कितो ग्रन्थः जनता-स्नातकोत्तर महाविद्यालयस्य, अजोतमलस्य, संस्कृत विभागाध्यक्षस्य डॉ० कैलाशनाथ द्विवेदिनो महत्त्वपूर्णमनुसन्धानकार्यं निदर्शयति । कर्णपुरविश्वविद्यालयीय साहित्यवारिधि (डी० लिट्०) इति सर्वोच्चोपाध्ये स्वीकृत आसीत् ग्रन्थोऽयं १९७६ तमे ई० वर्षे "सप्तसैन्धवप्रदेशः—ऋग्वेद के आधार पर भौगोलिक अध्ययन" इति शीर्षके संस्कृत-विषये सर्वप्रथमवारम् ।

समीक्ष्यग्रन्थोऽयं द्विखण्डात्मकोऽष्टमानचित्रैः प्रमाणितः, तथ्यपूर्णभूमिकोपसंहारविरहितनवाध्यायेषु विभक्तश्च विलसति । प्रथमखण्डस्य प्रथमपंचाध्यायेषु ऋग्वैदिक-भौतिक-भूगोल-विवेचनं विशदं तथ्यपूर्णञ्च विद्यते; यस्मिन् आर्याणां मूलनिवासस्य सम्यग्रूपेण समाधानं कृत्वा सप्तसैन्धवप्रदेशमेव तेषां मूलनिवासं मत्वा लेखकेन तस्य स्वरूपेण सह सीमाऽपि निर्दिष्टा । द्वितीयेऽध्याये—ऋग्वैदिक-जलवायु-प्राकृतिक-वनस्पति-जीवजन्तूनां तलस्पर्शि-विवेचनं, तृतीयेऽध्याये-ऋग्वैदिक-भौमिक-संरचनाया समीक्षा, चतुर्थेऽध्याये ऋग्वैदिक-स्थलीय-प्रवाहशील-प्राकृतिकरूपाणां नदीनदानां निरूपणम्, पंचमे अध्याये—जलमण्डलीयस्थिरस्वरूपाणां (सरोवर-सागरादीनाञ्च गहनमनुशीलनम् प्रत्यभिज्ञानञ्च प्रतिभाशालिलेखकेन कृतमस्ति ।

अस्य ग्रन्थस्य द्वितीयखण्डेऽध्यायचतुष्टये ऋग्वैदिकार्थिकसांस्कृतिक राजनैतिक यौद्धिक प्रभृति पक्षाणां वैदुष्यपूर्णं भौगोलिकमध्ययनं वर्तते ।

अस्य ग्रन्थस्य आद्योपान्तानुशीलनपर्यालोचनकारिणां विदुषामभिमतान्यपि विचारणीयानि सन्ति । डॉ० पुरुषोत्तम लालः भार्गव इमं ग्रन्थं एवं विवेचयति—

"The author's approach is dogmatic, critical and to the point with original factual and wonderful findings regarding physical and cultural (Human) Geography of Sapta Sindhu Pradesh."

डा० श्रीधरभास्करवर्णेकरः (प्रख्यातमहाकविर्नाटककारश्च) कथयति समीक्षायाम् "डॉ० द्विवेदी ने वैदिक वाङ्मय के क्षेत्र में "ऋग्वैदिक भूगोल" जैसा उत्कृष्ट ग्रन्थ लिखकर अत्यन्त महत्त्वपूर्ण कार्य किया है। ऋषियों के गम्भीर भौगोलिक ज्ञान विषयक महत्त्वपूर्ण मौलिक अन्वेषण के लिए मैं लेखक का अभिनन्दन करता हुआ यह आशा करता हूं कि यह ग्रन्थ प्राच्य विद्यानुरागियों को विशेष उपादेय सिद्ध होगा।"

उ० प्र० संस्कृत अकादम्याः उपाध्यक्षः लक्ष्मणपुरविश्वविद्यालयीय संस्कृतविभागाध्यक्षः डा० शिवशेखरमिश्रः समीक्षयन् लिखति ग्रन्थविषये—

"इस महत्त्वपूर्ण ग्रन्थ में विद्वान् लेखक ने ऋग्वैदिक भूगोल का ऐतिहासिक, सांस्कृतिक पृष्ठभूमि पर उच्चस्तरीय आलोचनात्मक अध्ययन किया है, जो वैदिक संस्कृत के साथ भूगोल के अध्येताओं के लिए भी अत्यन्त उपादेय है।

आशास्यते, ग्रन्थोऽयं प्राच्यविद्यानुरागिणामनुसन्धित्सूनां कृते महत्त्वमावहन् रचनात्मकाभिनव दृष्टिलाभाय आधारभूतो भविष्यतीति ।

# ऋग्वैदिकगुङ्गुविमर्शः

डॉ कैलाश नाथ द्विवेदी—
डी० लिट्०

ऋग्वेदोऽस्माकं पुरातनभारतीयसंस्कृतेः पावनतमः स्मारकोऽस्ति, यस्मिन्निखिलधर्मदर्शनकलेतिहासभूगोलज्ञानविज्ञानादिविषयाणां समावेशो विद्यते। ऋषयोऽनेकस्थलेषु वर्ण्यविषये तद्युगीन प्राचीनार्यानार्यजातीनामपि ऐतिहासिकदृष्ट्योल्लेखं कृतवन्तः, यास्वेका सरस्वत्याः सहायकनद्याः गुङ्ग्वोस्तटवर्तिनीजातिः ऋग्वेदे दशममण्डलेऽष्टचत्वारिंशत्तमे सूक्ते इन्द्र-सम्वन्धितायामेकस्यामृचि गुङ्गूनामुल्लेखः जातिरूपेण कृतः

"अहं गुङ्गुभ्यो अतिथिग्वमिष्करमिषं न वृत्रतुरं विक्षुधारय।
यत् पर्णयघ्न उत वा करञ्जहे प्राहं महे वृत्रहत्ये अशुश्रवि॥"
—ऋक्० १०/४८/८

मंत्रेऽस्मिन् गुङ्गवः जातिरूपेण स्पष्टतः तृत्सूनां भरतानां वा राज्ञः दिवोदासस्य अतिथिग्वस्य अमित्ररूपेण विरुद्धाः वर्णिताः, तस्माच्चाल्पशक्तिमया इमे आसन्। तृत्सुराजोऽतिथिग्वो दिवोदासोऽमीषां गुङ्गूनां तथैव संहारकः सिद्धो वभूव यथा इन्द्रः पर्णयकरंजवृत्रादीनां संहारे प्रसिद्धोऽस्ति। अतएव सिद्ध्यति यत् गुङ्ग्वोऽपि दासदस्यूनामिव आदिमा अनार्या आसन्। प्रतीयते इमेऽपि उत्तरवर्तिहिमवन्तपर्वतीयभूभागसम्वन्धिताश्च आसन्।

पाश्चात्यैः लुडविग[1]मैकडॉनेल[2]कीथादिविद्वद्भिः भ्रमवशात् गुंगुजातिरियमतिथिग्वस्य मित्ररूपेण परिकल्प्य आर्यजातिर्निर्धारिता, किन्तु

---

१. ऋग्वेदानुवादः, तृतीयो भागः, पृ० १६५

२. वैदिक इंडेक्स भाग १ (अनु० रामकुमार रायः), वाराणसी, पृ० २५४

प्रस्तुतायाः ऋचः सन्दर्भदृष्ट्याऽसंगेतोऽयं विचारः। श्री राहुल[३]सांकृत्यायनसदृशभारतीयपंडिताः गुङ्गून् अनार्यं जातेरभिन्नं प्रतिपादयन्ति। ऋचः सन्दर्भदृष्ट्या समीचीनोऽयं दृष्टिकोणः।

सरितः गुङ्ग्वोः सिनीवालीराकासरस्वतीभिः सह ऋग्वेदे द्वितीयमण्डले ऋषिणोल्लेखः एवं कृतः—

**"या गुङ्गूर्या सिनीवाली या राका या सरस्वती।"**

ऋक्० २।३२।८।

अतः नदीयं सिनीवालीराकयोरिव सरस्वत्याः सहायिकैव प्रतीयते। अस्याः समीकरणं सम्प्रति लोहगध (Lohgadh) नद्या सह कर्तुं शक्यते या सिनीवाल्याः संगत्य सरस्वतीं प्रति प्रवहति। श्री एम० एल० [४]भार्गवस्य समीकरणं सर्वथा समीचीनमनया दृष्ट्या। अतः गुङ्गुजातीयजना अपि अस्याः नद्याः अभिधानेन समन्विता भूत्वा अस्या एव तटे निवसन्ति स्म। तद्स्थानीयक्षेत्रं देशं वा गुङ्गुनाम्ना प्रथितमासीत्।

प्रतीयते, आर्यविरोधिनां गुङ्गूनां क्षेत्रमतिथिग्व दिवोदासस्य (तृत्सु भरतजनस्य) उत्तरपूर्वे यमुनागंगयोरुद्गमस्थलसमीपे हिमालयश्रृंखलास्ववस्थितमासीत्। तृत्सूनां (भरतानां) पूर्वीयसीमायाः शत्रवः गुङ्गवोऽजशिग्रुयक्षुजनानां निकटस्था आसन् पराक्रमी दिवोदासः इन्द्र इव एषां वृत्रहत्यया समं संहारं संपाद्य एषामन्नधननिधिं हस्तंगतं चकार।

गुङ्गूनां भौगोलिकी[५] अवस्थितिः पर्वतीयाऽऽसीत्। अतः सैन्यविज्ञान दृष्ट्या एभ्यो नैसर्गिकी सुरक्षा उपलब्धाऽऽसीत्, किन्तु सैनिकशक्त्या यौद्धिकसाधनैश्च तृत्सुभ्योऽल्पतराःक्षीणतराश्च भूत्वाऽन्ततोऽतिथिग्वेन दिवोदासेन इमे पराजिताः। आर्यानार्य युद्धान्तेऽमीषां प्रचुरधनसम्पत्तिः तृत्सूनां हस्तंगताऽभवत्॥ इतिशम्॥

---

३. ऋग्वेदिक आर्य, प्रयाग, १९५७ पृ० २४, ११६

४. A Geography of Rigvedic India, Lucknow. p. 58

५. सप्तसैन्धव प्रदेशः (ऋग्वेदिक भूगोल) कर्णपुर विश्वविद्यालयीय डी० लिट्० उपाधये स्वीकृतः लेखकस्य शोधग्रन्थः, साहित्यनिकेतनम् कर्णपुरम् १९८४ पृ० १४८-१४९

# आगमीयं दर्शनम्

पण्डित श्री व्रजवल्लभद्विवेदी
वाराणसी

काशीस्थः कश्चिद् दार्शनिकप्रवरो दर्शनगोष्ठी समायोजको द्वित्र-वर्षेभ्यः पूर्वं मामवोचत्—यद्यपि नास्ति तन्त्रागमवाङ्मये काचन दार्शनिकी वार्ता, तथापि भवता तत्र समागन्तव्यमिति। दर्शनशास्त्रस्य प्रचलिताः काश्चन शाखाः शास्त्रार्थबहुलाः समधीयानैरेतादृशैर्विपश्चिद्भिर्न दृष्टः स्यात् सायणमाधवीयः सर्वदर्शनसंग्रहः, यत्र किल नकुलीशपाशुपतदर्शनम्, प्रत्यभिज्ञादर्शनम्, शैवदर्शनं च संगृहीतम्। काश्मीरस्य प्रत्यभिज्ञादर्शनस्य गरिमाणं को नाम न जानीते साम्प्रतिको दार्शनिको भारतीयस्य दार्शनिकवाङ्मयस्य तुलनात्मिकया ऐतिहासिक्या च दृष्ट्याऽनुशीलनमाचरन्। वस्तुतस्तु तन्त्राणां कापि दार्शनिकी महनीयता नास्तीति डॉ० कीथमहोदयो भणति। तन्मतमनुसरन् म० म० पी० काणेमहोदयोऽपि स्वीयस्य धर्मशास्त्रेतिहासस्य तन्त्रशास्त्रीये प्रकरणे सायणमाधवबन्धुभ्यां सर्वदर्शनसंग्रहे तान्त्रिकदर्शनविषये न किमप्युक्तमिति लिखति। मतमेतदस्माभिः "आगम आणि तन्त्र शास्त्र" (आगम और तन्त्रशास्त्र) इति शीर्षके मराठी-हिन्दीभाषानिबद्धे निबन्धे तन्त्रागमशास्त्रयोः पार्थक्यनिरसनपूर्वकं समालोचितम्।

तथाहि—सात्वतसंहिता पाञ्चरात्रीया सात्वततन्त्रमिति, पाद्मसंहिता च पाद्मतन्त्रमिति नाम्नाऽपि प्रथिता वर्तते। लक्ष्मीतन्त्रं पाञ्चरात्रागमस्यैव ग्रन्थः। सिद्धान्तशैवीयो मृगेन्द्रागमो मृगेन्द्रतन्त्रमिति, मतङ्गपारमेश्वरागमश्च मतङ्गपारमेश्वरतन्त्रमिति नाम्ना प्रसिद्ध्यति। सर्वासां तन्त्रागमशाखाप्रशाखासिद्धान्तानां संग्राहकोऽभिनवगुप्तप्रणीतो ग्रन्थस्तन्त्रा-

लोकनाम्ना प्रथते। आगमनाम्ना तन्त्रनाम्ना वा प्रथितेषु ग्रन्थेषु प्रायः समाना एव विषयाः प्रतिपादिताः सन्ति। शाक्त तन्त्राणि शाक्तागम-नाम्नाऽपि संबोध्यन्ते। वैदिकी तान्त्रिकी चेति द्विविधा श्रुतिः स्मृति-पुराणादिषु प्रख्याता। अत्र तान्त्रिकशब्दः सम्पूर्णस्य आगमिकस्य तान्त्रिक-स्य च वाङ्मयस्य संग्राहक इत्येकप्रकृतिकं सम्पूर्णमिदं वाङ्मयमागम-नाम्ना तन्त्रनाम्ना वा यथेच्छं संबोधयितुं शक्यते।

पाञ्चरात्रपाशुपतमतयोः प्राचीनताविषये न कश्चन विवादः प्रव-र्तते। शाक्तागमानां प्रत्नताविषयोऽप्यस्माभिः पूर्वोक्त एव निबन्धे सुविचा-रितः। वैदिकं वाङ्मयम्, पाञ्चरात्रपाशुपतमते, जैन बौद्धमते, पौराणिकं वाङ्मयम्, सन्तसाहित्यं चेति वर्तते भारते वर्षे शास्त्रीयस्य वाङ्मयस्य विकासक्रमः। सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं मतं चेति कृतान्त-पञ्चकस्य सर्वत्राप्रतिहतं प्रामाण्यमूरीक्रियते। कबीर वाणीष्वपि तन्त्रा-गमीया दृष्टिरेव सर्वत्राऽनारतं स्पन्दते। निदर्शनतया मालिनीविजयोत्तर-तन्त्रस्य वचनानीमानि द्रष्टव्यानि—

नात्र शुद्धिर्न चाशुद्धिर्न भक्ष्यादिविचारणम्।
न द्वैतं नापि चाद्वैतं लिङ्गपूजादिकं न च॥

न चापि तत्परित्यागो निष्परिग्रहतापि वा।
सपरिग्रहता वापि जटाभस्मादिसंग्रहः॥

तत्त्यागो न व्रतादीनां चरणाचरणं च यत्।
क्षेत्रादिसंप्रवेशश्च समयादिप्रपालनम्॥

परस्वरूपलिङ्गादि नामगोत्रादिकं च यत्।
नास्मिन् विधीयते किञ्चिन्न चापि प्रतिषिध्यते॥

विहितं सर्वमेवात्र प्रतिषिद्धमथापि वा।
तत्त्वे चेतः स्थिरी कार्यं सुप्रयत्नेन योगिना।
तच्च यस्य यथैव स्यात् स तथैव समाचरेत्॥

तत्त्वे निश्चलचित्तस्तु भुञ्जानो विषयानपि ।
न संस्पृशेत दोषैः स पद्मपत्रमिवाम्भसा ॥

विषापहारिमन्त्रादिसंनद्धो भक्षयन्नपि ।
विषं न मुह्यते तेन तद्वद् योगी महामतिः ॥

(१८।७४-८१)

तन्त्रागमवाङ्मये आन्तरवरिवस्यायाः, भावशुद्धेरेव प्राधान्यं प्रतिपाद्यते । शक्तिसंगमतन्त्रे—

विष्ठापूर्णे मृद्घटे तु बहिः शुद्धौ हि किं फलम् ।
अन्तःशुद्धिं समासाद्य बहिः शुद्धिं समाचरेत् ॥

(४।११।७४)

इत्येवमन्तःकरण शुद्धेरेव प्राथम्यं वर्णितम् । विज्ञानभैरव-संकेत-पद्धतितन्त्रालोकादि वचनेषु विषयस्यास्य विस्तरो वर्तते । विभिन्नासु भारतीयासु भाषासु कवयद्भिः सिद्ध-नाथ-सन्तादिपदाभिधेयैः, सूफीनाम्ना प्रसिद्धैरिस्लाम धर्मानुयायिभिश्च विचारकैर्भारतीयां तन्त्रागमसरणिमनुसृत्यैव सर्वमेतन्निबद्धमिति श्रद्धेय चरणानां श्री श्रीगोपीनाथकविराजमहोदयानाँ स्थापना शनैः शनैः साम्प्रतिकैः सुधीभिरप्यङ्गीक्रियत इति प्रसन्नताया अयं विषयः ।

तन्त्रागमीयं हि दर्शनं न शुष्कं तर्कमाश्रयते । "तर्को योगाङ्गमुत्तमम्" (१७।१८) इति मालिनीविजयोत्तरवचने शास्त्रानुमोदितस्यैव तस्योत्तमत्वमुद्घोषितम् । स हि तर्कः—"मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन् को न ऋषिर्भविष्यतीति । तेभ्य एतं तर्कमृषिं प्रायच्छन्" (१३।१२) इत्येवं निरुक्तकारेण यास्केन मुनिना, "आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥" इत्येवंमनुना च प्रशंसितः । "तर्काऽप्रतिष्ठः श्रुतयो विभिन्नाः" (३।३२।६५) इति महाभारतवचनम्, "तर्काप्रतिष्ठानात्" (२।१।११) इति बादरायणीयं सूत्रम्, "यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः । अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥" (१।३४) इति

वाक्यपदीयकारभर्तृहरिवचश्च निरागमान् पुरुषोत्प्रेक्षामात्रनिबन्धनान् तर्कानेव परामृशन्ति, नागमानुमोदितान् । वेदशास्त्राद्यनुमोदितायां च तर्कसरण्याम्—"सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः" (१।१) इति तत्त्वार्थसूत्रपद्धत्या सम्यग्दर्शनस्य सम्यग्ज्ञानस्य, सम्यक् चारित्रस्य च समानमानं महत्त्वं वर्तते । सम्यग्दर्शनज्ञानयोः सत्त्वेऽपि सम्यक्चारित्राभावादेव साम्प्रतिकाः केचन भारतीयास्तार्किका वेदान्तिनः "कलौ वेदान्तिनो भान्ति फाल्गुने बालका इव" इत्याभाणकं चरितार्थयन्ति ।

तन्त्रागमग्रन्थेषु किल नूनं सम्यग्दर्शनज्ञान चारित्राणां सिद्धये ज्ञानयोगक्रियाचर्याख्याश्चत्वारः पादाः समुपवर्ण्यन्ते । तत्र सम्यग्दर्शनसिद्धये ज्ञान (विद्या) पादः, सम्यग्ज्ञानसिद्धये योगपादः, सम्यक् चारित्रस्य सिद्धये च क्रियाचर्यापादौ समुपदिश्यन्ते । पादविभागाभावेऽपि शैव-शाक्त-वैष्णव-बौद्धादिषु सर्वेषु तन्त्रेषु त इमे विषयाः सर्वत्र समुपलभ्यन्ते । अत्र च यद्यपि सम्यक्चारित्रप्रतिपादकयोः क्रियाचर्यापादयोरेव प्राधान्यं विस्तारश्च, एवं सत्यपि यथोचिता दार्शनिकी दृष्टिरपि सर्वत्र समुन्मीलितैव । न केवलं स्पन्दप्रत्यभिज्ञा-त्रिकदर्शनेषु, शैवागमेष्वपि द्वैतवादिषु सिद्धान्ताख्येषु, शाक्तागमेषु च वर्तते विशिष्टो दार्शनिकोंऽशस्तत्रत्येषु विद्यापादेष्वन्यत्र च । अष्टप्रकरणनाम्ना मुद्रितेषु ग्रन्थेषु वर्तन्ते पञ्च ग्रन्थाः सद्योज्योतिः शिवाचार्यस्य, यो हि शिवदृष्टिकारेण सोमानन्देनापि सादरं स्मृतः। तस्यैव कृतिः नरेश्वरपरीक्षा भट्टरामकण्ठकृतव्याख्यानयुता कश्मीरग्रन्थमालायां प्रकाशिता । समुपलभ्यते च भोजनृपतिरचितस्तत्त्वप्रकाशः कुमारदेवाघोरशिवाचार्यकृताभ्यां वृत्तिव्याख्यानाभ्यां समुपेतः । एतदाधारेणैव सायणमाधवाभ्यां सर्वदर्शनसंग्रहे शैवदर्शनं संगृहीतम् । कुमारदेवकृते तत्त्वप्रकाशव्याख्याने नरेश्वरपरीक्षाव्याख्याने च रामकण्ठकृते तन्त्रागमविदुषां गहना दार्शनिकी दृष्टिस्तर्कपद्धतिश्चावलोकयितुं शक्येते ।

नकुलीशपाशुपतदर्शनेऽपि भूयांसः सूत्र-भाष्य-कारिकप्रधाना ग्रन्थाः सन्ति मुद्रिताः । अस्य दर्शनस्य प्रवर्तको वर्तते पुराणपठितेष्वष्टाविंशतियोगाचार्येष्वन्तिमो लकुलीशो नाम । तस्य शिष्या लाकुलाः, मौसुलाः, वैमलाः, कारुकाश्चेति नामभिः प्रख्याताः क्षेमराजादिभिः काश्मीरैर्विद्वद्भिः सूच्यन्ते । कारोहणतीर्थावतीर्णेन लकुलीश शिष्येण मुसुलेन्द्रेण हृदयप्रमाण-

नामा ग्रन्थो रचित आसीदिति परमोक्षनिरास कारिकाव्याख्यायां रामकण्ठो भाषते। प्रपञ्चसारशारदातिलक-नित्याषोडशिकार्णवादिष्वपि दार्शनिकानि तत्त्वानि विव्रियन्ते। त्रिपुरा-क्रम-कुल-त्रिकतन्त्रेषु नित्याषोडशिकार्णवादिषु शाक्तसम्प्रदायीया महनीया दार्शनिकी विशिष्टा पद्धतिर्विवृता। एवं च नास्ति तन्त्राणां कापि दार्शनिकी महनीयतेति मुधैव भाषितम्।

वस्तुतस्तु पाश्चात्त्यो विद्वान् जान-उडरफमहोदयस्तत्सहयोगिनश्च भारतीया विद्वांस इदम्प्रथमतया साम्प्रतिके काले तान्त्रिकवाङ्मयस्य प्रकाशकाः प्रचारकाश्च सन्ति। एभिः प्रकाशितं वाङ्मयं दृष्ट्वैवसंस्कृतसाहित्येतिहासकारः शर्मण्यो विद्वान् श्रीमान् विण्टरनित्जः पुराणतन्त्रशास्त्रयोरनुशीलनं नैव रुचिरमिति वक्ति। एतादृशाः प्रवादास्तु म० म० पी० वी० काणेमहोदयेन सम्यगुत्तरिताः, किन्तु "प्रायेण हि सिद्धान्तप्रियो लोकः" इति क्षेमराजोक्तिः—"यद्यप्यस्ति त्रिकालज्ञस्त्रैलोक्याकर्षणक्षमः। तथापि लौकिकाचारं मनसाऽपि न लङ्घयेत्॥" इति शक्तिसंगमतन्त्रवचनं स्मारयति। केचन तान्त्रिका लौकिकाचारं निरस्य स्वेच्छाचारमाचरन्ति स्म। ते च दानसागरकारेण वल्लालसेनेन प्रतिक्षिप्ताः। ते सम्पूर्णं तान्त्रिकं वाङ्मयं सममेव बौद्धमतेन समाजोपेक्षाकुक्षिनिक्षिप्तमभूत्। पाशुपत-पाञ्चरात्रादीनि मतान्यवैदिकानीति प्रवादप्रकर्षश्च क्षतेः क्षारमिव प्रावर्तत। अनयोपेक्षया शनैः शनैस्तान्त्रिके वाङ्मये विकृतिः पदमधात्। विकृतिमापन्नं तादृशं तान्त्रिकं वाङ्मयं दृष्ट्वैव साम्प्रतिकानां पाश्चात्त्यानां तदनुवर्तिनां भारतीयानां च प्रावादुकानामुक्तयः प्रचरन्ति।

पाञ्चरात्रादिवैष्णवागमेभ्यो रामानुजादीनां वैष्णवाचार्याणां दर्शनानि, पाशुपतशैवागमेभ्यश्च शैवदर्शनानि प्रसृतानीत्यत्र को नामसचेता विवदेत। पाञ्चरात्रोपजीवत्वमुभयोरपि रामानुजमाध्वमतयोः समानो धर्म इति भणति सर्वदर्शनसंग्रहकारः। सात्वतसंहिता-जयाख्यसंहिता-अहिर्बुध्न्यसंहिता-लक्ष्मीतन्त्रादिषु प्रतिपादिता दार्शनिकी सरणिरेव वैष्णवाचार्यैः सम्यग् विस्तार्यते। श्रीकण्ठभाष्यव्याख्याता श्रीमानप्पयदीक्षितो सद्योज्योतिःशिवाचार्यस्य मोक्षकारिकाम्, रौरववार्त्तिककारबृहस्पतिपाद-

वचनं च समुद्धरति। सद्योज्योतिः शिवाचार्यः, बृहस्पतिपादश्च शैवागमानामाद्यौ व्याख्याताराविति भट्टरामकण्ठो मोक्षकारिकाव्याख्यानारम्भे भाषते—

**याभ्यां प्रकाशितं वर्त्म सिद्धान्ते सिद्धभावतः।**
**गुरूणामपि तौ वन्द्यौ सद्योज्योतिबृहस्पती ।। इति।**

एवं च नास्ति तन्त्राणां कापि दार्शनिकी महनीयतेति यत्किञ्चिदेतत्।

स्थूणानिखननन्यायेन तन्त्रागमानां दार्शनिकी महनीयता सप्रमाणमत्र प्रसाध्यते तत्र तत्र विप्रकीर्णान् सिद्धान्तान् संगृह्य संक्षेपेण।

वैष्णवीयेषु वैखानसागमेषु विष्णु-पुरुष-सत्य-अच्युत-अनिरुद्धाख्य-पञ्चव्यूहरूपेण भगवानर्च्यते। अत्र विष्णुरादिमूर्तिपदेन, पुरुषादयश्च चतुर्मूर्तिपदेनाभिधीयन्ते। पञ्चमूर्तय एताः पञ्चवीरपदेनाप्युच्यन्ते। वैखानसाः पद्मकोशप्रतीकाशे महति विश्वस्यायतने हृदये विज्वलद्वैश्वानरशिखामध्यस्थं परमात्मानं नारायणापराभिधं श्रीविष्णुमेवाक्षरं ब्रह्मेति विदुः। तदेतद् ब्रह्म निष्कलेन सकलेन च स्वरूपेण राजते। श्रीश्च भवति तस्य शक्तिः। सा च नित्या आद्यन्तरहिताऽव्यक्तरूपिणी विष्णोः संकल्पाच्च प्रवर्तते।

पाञ्चरात्रीयायां जयाख्यसंहितायाम् अहिर्बुध्न्यसंहितायां लक्ष्मीतन्त्रे च सात्वतसंहितायां संक्षेपेण प्रतिपादिता दार्शनिकी सरणिरेव समुपबृंहिता। तत्र हि—"त्रिविधेन प्रकारेण परमं ब्रह्म शाश्वतम्। आराधयन्ति ये तेषां रागस्तिष्ठति दूरतः।।" (१।२३) इति परब्रह्मणस्त्रिविधां सत्तां संसूच्य—"षाड्गुणविग्रहं देवं भास्वज्ज्वलनतेजसम्। सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम्।। परमेतत् समाख्यातमेकं सर्वाश्रयं प्रभुम्।" (१।२५-२६) इत्येवं परब्रह्मणः स्वरूपमत्र वर्णितम्। तदनु "एतत्पूर्वं त्रयं चान्यज्ज्ञानाद्यैर्भेदितं गुणैः।। विद्धि तद्व्यूह-संज्ञं सन्निःश्रेयसफलप्रदम्।।" (१।२६-२७) इत्येवं वासुदेव-सङ्कर्षण-प्रद्युम्नानिरुद्धाख्यस्य व्यूहचतुष्टयस्य स्वरूपं निरूप्य, "गुणानुवृत्तिभेदेन युक्तं ज्ञाना-

दिभिर्गुणैः। नानाकृति च तद्विद्धि वैभवं भुक्तिमुक्तिदम् ॥" (१।२७) इति संक्षेपेण विभवस्वरूपं व्याख्यातम्।

तत्त्वत्रयव्याख्यानधृतविष्वक्सेनसंहितायां तु परब्रह्मणः पर-व्यूह-विभव-अन्तर्यामि-अर्चावतारभेदेन पञ्च प्रकारत्वमुपदिश्यते। तथैवोपपादितमेतत् तत्त्वत्रये तद्व्याख्याने च। यतीन्द्रमतदीपिकाकारश्रीनिवासदासादयो रामानुजसम्प्रदायानुयायिनः श्रीवैष्णवास्तदेतद् पञ्चविधं परं ब्रह्मैवोपासते। "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि मन्त्रारूढानि मायया॥" (१८।६१) इति भगवद्गीतोक्त्याऽन्तर्यामिस्वरूपस्य ब्रह्मणः सत्त्वं सिद्ध्यत्येव। 'सर्वत्रगोऽसि भगवन् किल यद्यपि त्वामावाहयामि हि यथा व्यजनेन वायुम्। गूढो यथैव दहनो मथनादुपैति आवाहितोऽपि हि तथा त्वमुपैषि चार्चाम्॥" (२५।१२१) इति सात्वतसंहितावचनमप्यर्चावतारस्य सत्तां सूचयति।

तत्र सततोदितया नित्योदिताऽपरनामधेयया दशया युक्तः परवासुदेव इति, शान्तोदितया च दशया युक्तो व्यूहवासुदेव इत्युच्यते। परवासुदेवे षाड्गुण्यं स्तिमितं व्यूहवासुदेवे च प्रबुद्धमवतिष्ठते। शान्तोदितो व्यूहवासुदेवः षाड्गुण्यमहिम्ना यथायथं शान्तेषु चतुर्षु गुणेषु प्रबुद्धयोश्च द्वयोर्द्वयोर्गुणयोः साहाय्येन क्रमशः सङ्कर्षण-प्रद्युम्न-अनिरुद्धाख्यानि त्रीणि रूपाणि धत्ते। एवं च परब्रह्मणश्चातुरात्म्यं निष्पन्नं भवति व्यूहाख्यम्। चातुरात्म्यं चैतज्जाग्रत्स्वप्नसुषुप्तितुर्याख्येषु चतुर्षु पदेष्ववतिष्ठते। तत्र तुर्यपदस्थिते परब्रह्मणि चातुरात्म्यं स्तिमितं भवतीत्येकमूर्तिपदेन तदुच्यते, एकेनैव च मन्त्रेण तदाराधनं क्रियते। सुषुप्तिस्वप्नजाग्रत्पदेषु च चातुरात्म्यस्य प्रबुद्धत्वात् तदाराधनाय पृथक् पृथक् चत्वारो मन्त्रा विनियुज्यन्ते। तदेतच्चातुरात्म्यसमाराधनमस्माभिः सात्वतसंहिताया उपोद्घाते (पृ० २२-२९) विस्तरेण विवेचितमिति तत एवावलोकनीयम्।

जीवानां संसारखेदनिवृत्त्यर्थं वासुदेवादिचतुष्टयमेव प्रत्येकं त्रिधा विभक्तं भवति। तद्यथा-वासुदेवः केशव-नारायण-माधवरूपेण, सङ्कर्षणो गोविन्द-विष्णु-मधुसूदनरूपेण, प्रद्युम्नस्त्रिविक्रम-वामन-श्रीधररूपेण, अनिरुद्धश्च हृषीकेश-पद्मनाभ-दामोदररूपेण व्यक्तचक्रादि लाञ्छनैः सह भगवदेकान्तिनां पोषकत्वेन शाश्वतीमभिव्यक्तिमभ्येति। एतच्च द्वादशविधं

स्वरूपमहिर्बुध्न्ये व्यूहान्तरपदेन निरूच्यते (५।४६)। द्वादश व्यूहान्तराणीमानि द्वादशमासाधिपतित्वेन व्याख्यायन्ते पुराणेष्वागमेषु च।

अहिर्बुध्न्यसंहितायामेकोनचत्वारिंशद्विभवदेवाः प्रतिपादिताः—"त्रिंशच्च नव चैवैते पद्मनाभादयो मताः" (५।५७) इति। सात्वतसंहितायां (९।७७-८३) त्वष्टत्रिंशत्संख्याकास्ते वर्णिताः। अत्र सात्वतसंहिताभाष्यकारेण अलशिङ्गभट्टेन—"पद्मनाभादयोऽष्टत्रिंशद्विभवदेवाः, तेषामधिपतिर्विशाखयूपस्त्वेकः, तेन सहैकोनचत्वारिंशद्देवा इत्यभिप्रायेण त्रिंशच्च नव चैवैत इत्युक्तम्" (पृ० १८५) इति व्यवस्था दत्ता।

तेषु विभवदेवेषु "लोकनाथस्तु शान्तात्मा" (सा. सं० ८।८१) इत्येवं सविशेषणं लोकनाथो वर्ण्यते। "शान्तात्मेति लोकनाथस्य विशेषणम्" (पृ० १८४) इति हि तद्भाष्यकारः। द्वादशे परिच्छेदेऽस्य ध्यानमेवं वर्ण्यते—"लोकनाथं विशालाक्षं सर्वदेवनमस्कृतम्॥ वरसिंहासनारूढं ध्यायेन्मीलितलोचनम्। पद्मासनेनोपविष्टं पद्मगर्भोपमद्युतिम्॥ करुणाविष्टबुद्धिं च शङ्खपद्मकराङ्कितम्। ज्ञानवैराग्यसद्धर्ममार्गत्रयनिदर्शकम्॥" (१२।१०८-११०) इति। "अस्य रूपान्तरं बुद्धावतार इति बोध्यम्" (पृ० २३९) इत्युक्त्वा तद्भाष्यकारः पौष्करसंहितावचनमेवं समुद्धरति—"लोकेश्वरः शान्ततनुर्बौद्धं यस्यापरं वपुः। नियन्ता बुद्धिधर्माणां हिंसादोषस्य दूषकः॥" (३६।२२६) इति। अस्य स्थानं च पौष्करप्रामाण्येनैव प्रदर्शयति—"मगधामण्डले विप्र! महाबोधधराश्रितः। संस्थितो लोकनाथात्मा देवदेवो जनार्दनः॥" (३६।३५९-३६०) इति। एवं च पाञ्चरात्रसंहितासु बुद्धस्य भगवतो विभवावतारत्वं वर्ण्यत इत्यत्र नास्ति संशीतिलेशोऽपि। पुराणेषु च भगवतो बुद्धस्य दशावतारेषु परिगणनं क्रियत इति जानन्त्येव सुधियः। न केवलं वैष्णवदर्शनेषु, वैष्णवेषु पुराणेष्वपि पाञ्चरात्रागमीयसिद्धान्तानामुप बृंहणं द्रष्टुं शक्यते।

शिवपुराणे द्विविधः शिवागमः प्रदर्शितः—श्रौतः स्वतन्त्रश्चेति। तत्र स्वतन्त्रः शिवागमो दशधाऽष्टादशधा च विभक्तः कामिकादिसमाख्याभिः प्रसिद्धः। स्वतन्त्रोऽयं शिवागमः सिद्धान्तपदवाच्यः। "सिद्धान्तशब्दश्च 'पङ्कजादिपदवद् योगरूढ्या शिवप्रणीतेषु कामिकादिषु दशाष्टादशसु

तन्त्रेषु प्रसिद्धः" (पृ० ५) इति रत्नत्रयोल्लेखिन्याम् अघोरशिवाचार्यः, "शैव-शब्देन अनुत्तीर्णपदप्रापकं कैरणादिसिद्धान्तशास्त्रमुच्यते" (११।७४) इति च क्षेमराजः स्वच्छन्दोद्योते निर्वक्ति। श्रौतस्तु शतकोटिप्रविस्तरः, यत्र पाशुपतं व्रतं ज्ञानं चोच्यते। क्रिया तपोजपध्यानदानात्मकानि पञ्च पर्वाणि भवन्ति तत्र। तदिदं शास्त्रं चत्वार ऋषयः संक्षिप्योपदिशन्ति रुरु-दधीचि-अगस्त्य-उपमन्युनामानः। धौम्याग्रजेनोपमन्युना श्रीकृष्णायोपदिष्टं पाशुपतं ज्ञानं महाभारते वायुसंहितायां उत्तरभागे च संगृहीतं विद्यते।

पाशुपतशास्त्रस्य न कोऽप्यागमग्रन्थः साम्प्रतमुपलभ्यते। किन्तु विशुद्धमुनिकृते आत्मसमर्पणे श्वेतादिलकुलीशान्तानामष्टाविंशति पाशुपतयोगाचार्याणां नामावली दृश्यते। अष्टाविंशतियोगाचार्याणां प्रत्येकं चत्वारः शिष्याः श्रूयन्ते। संहत्य द्वादशोत्तरशतं (११२) शिष्या भवति। सर्वेषामेषां नामानि शिवपुराणादिषु वर्णितान्यास्माकीने "पुराणवर्णिताः पाशुपता योगाचार्याः" इति शीर्षके निबन्धे पुराणपत्रिकामुद्रिते विवेचितानि द्रष्टव्यानि। पाशुपतयोगाचार्येष्वन्तिमो लकुलीशस्तन्नाम्ना प्रसिद्धस्य पाशुपतमतस्य प्रवर्तको मन्तव्यः। लकुलीशपाशुपतदर्शनं च पञ्चधा दशधा च ज्ञातव्यम्। तत्रयामुनाचार्येणागमप्रामाण्ये कारणं कार्यं विधिर्योगो दुःखान्त इति पञ्चधा भिन्ना पाशुपतप्रक्रिया संक्षेपेणैवं व्याख्याता—

"उपादानं निमित्तं च व्याख्यातं कारणं द्विधा।
निमित्तकारणं रुद्रस्तत्कला कारणान्तरम्॥

मह्यन्तं महदादि कार्यमुदितं तद्वद्विधिर्गीयते।
मूढाचारमुखश्मशानभसितस्नानावसानः परः।

योगो धारणमुच्यते हृदि धियामोङ्कारपूर्वं तथा
दुःखान्तो हि मतोऽपवर्ग इति ते पञ्चापि संकेतिताः॥

आत्यन्तिकी दुःखनिवृत्तिर्दुःखान्तशब्देनोक्ता। तामेव निश्शेषवैशेषिकात्मगुणोच्छेदलक्षणां मुक्तिं मन्यन्ते" (पृ० ९५-९६) इति। इदमत्रावधेयम्—अत्रत्यं दुःखान्तपदव्याख्यानं मुक्तिलक्षणं च न्यायवैशेषिकमतयोः

प्रातिनिध्यमाचरति, न लकुलीश पाशुपतमतस्य, सर्वदर्शन संग्रहे—"अन्यत्र दुःखनिवृत्तिरेव दुःखान्तः, इह तु पारमैश्वर्यप्राप्तिश्च" (पृ० ६४) इत्येवं तत्पदव्याख्यानदर्शनात् । पाशुपतसूत्र पञ्चार्थभाष्ययोश्चास्य विस्तरो द्रष्टव्यः ।

नवधा भिन्ना च पाशुपतप्रक्रिया गणकारिकायामष्टश्लोकात्मिकायां सूचिता। गणकारिकाव्याख्यायाम्, सर्वदर्शनसंगृहीते नकुलीशपाशुपत-दर्शने, शैवदर्शनबिन्दौ च नवगणस्यास्य विस्तृतं व्याख्यानम्, योगविधेर्मोक्षस्य च स्वरूपमवलोकनीयम्। नवगणस्य वेत्ता आचार्योऽपवर्गमधिगच्छति सच्छिष्ये च तद्योग्यतामादधाति ।

परा चैवापरा च विद्या उपनिषत्सु श्रूयते। शैवं ज्ञानमपि परापर-भदाद् द्विविधं भवति। तत्र परमवबोधरूपम् अपरं च कामिकादि तन्त्रस्व-रूपम्। अवबोधरूपं ज्ञानं शिवस्य शक्तिरेव। सा च द्विविधा-समवाय-वर्तिनी परिग्रहवर्तिनी च। तत्र समवायवर्तिन्यपि द्विविधा-बोधरूपा, क्रियारूपा चेति। तत्र बोधरूपा सर्वार्थपरिच्छेत्त्री । क्रियारूपा च विविधा-अनुग्रहरूपा, तिरोधानरूपा चेति। परावबोधरूपं ज्ञानमपरज्ञानरूपशब्दोपा-रूढमेवार्थेषु प्रवर्तते। निष्कलाच्छिवादवबोधरूपं ज्ञानमेव प्रथमं नादरूपत्वेन प्रसृतम्। पश्चात् सदाशिवरूपात् तन्त्राकारतां प्राप्तमपरं ज्ञानमेव सिद्धान्त-नाम्ना प्रथते। एतच्च त्रिपदार्थं चतुष्पादं च भवति ।

पतिपशुपाशाख्यास्त्रयः पदार्था यस्मिन् सन्ति प्रतिपादितास्तत्त्रि-पदार्थम्, विद्याक्रियायोगचर्यारूपाश्चत्वारः पादा यस्मिंस्तच्चतुश्चरणं तदेतच्छिवशास्त्रम् । तत्र पशूनामस्वतन्त्रत्वात् पाशानामचैतन्यात् पाशानामचैतन्यात् तद्विलक्षणस्य पत्युः प्रथममुद्देशः। चेतनसाधर्म्यात् पशूनां तदानन्तर्यम् । अवशिष्टानां पाशानामन्ते विनिवेश इति । दीक्षायाः परमपुरुषार्थहेतुत्वात् तस्याश्च पशुपाशेश्वरस्वरूपनिर्णयोपायभूतेन मन्त्र-मन्त्रेश्वरादिमाहात्म्यनिश्चायकेन ज्ञानेन विना निष्पादयितुमशक्यत्वात् तदवबोधरूपस्य विद्यापादस्य प्राथम्यम्। अनेकविधसाङ्गदीक्षाविधिप्रदर्श-कस्य क्रियापादस्य तदानन्तर्यम्। योगेन विना नाभिमतप्राप्तिरिति साङ्ग योगज्ञापकस्य योगपादस्य तदुत्तरत्वम् । विहिताचरणनिषिद्धवर्जनरूपां चर्यां विना योगोऽपि न निर्वहतीति तत्प्रतिपादकस्य चर्यापादस्य चरमत्व-

मिति विवेकः। तदत्र सर्वप्रथममुद्दिष्टः पतिपदार्थः पतिपाद्यते।

सर्वज्ञः सर्वकर्ता सर्वव्यापी सततोदितो नित्यमुक्तः पतिरचेतनस्य जडस्य मायादेर्महामायाप्रमुखस्य जगतः प्रवृत्तिजनकतया सिद्ध्यति। यस्य दृक्क्रियात्मकमैश्वर्यं स्वाभाविकं राजते, स ज्ञान क्रियात्मकशक्तिद्वययुक्तः स्वतन्त्रः प्रभुः शिवः पतिरित्युच्यते। अस्य पत्युः शरीरं स्वशक्तिकिरणात्मकमेव भवति। स च निष्कम्पोऽचलमूर्तिमान्। द्विधा हि आत्मनां मूर्तिः चला, अचला चेति। तत्र चला तत्त्वभौवनशरीरात्मिका, अच ला तु ज्ञान क्रियास्वभावा। तत्रायं पतिरचलमूर्तिमान्, न तु भौवन शरीर युक्तः। सैषाऽचलमूर्तिलक्षणा शक्तिः सर्वोत्कृष्टा परमाण्वादेरप्यतिसूक्ष्मा सर्वदिग्गता अमृतात्मिका प्रध्वस्तावरणा शान्ता आद्यन्तशून्याऽस्य पत्युः शरीरत्वेनोपचर्यते। स पतिर्वपुषो हस्तपादादिशरीरस्याविद्यमानत्वाद् यद् यत् कृत्यं सृष्टिस्थितिसंहारनिग्रहानुग्रहात्मकं करोति, तस्मिन् कृत्येऽस्य पत्युः शरीरं पञ्चकृत्योपयोगिना वपुषा पञ्चब्रह्मरूपेण शाक्तेन शरीरेण कल्पितं भवति। तदुक्तं मृगेन्द्रे—

**तद्वपुः पञ्चभिर्मन्त्रैः पञ्चकृत्योपयोगिभिः।**
**ईशतत्पुरुषाघोरसद्योवामाद्यैर्मस्तकादिकम्॥ (वि. ३।८)**

इति। पत्युरस्य च शक्तिरेव करणम्, तयैव तत्तत्क्रियानिष्पादनात्। यथा लोकेऽमूर्तोऽपि कालः क्षणमुहूर्तादिकः षड्ऋतुरूपः स्वस्वोचितपुष्प फलादीनां प्रतिक्षणं द्रव्यपरिपाकस्य बाल्ययौवनादेश्च साधकः कर्ता प्रख्यायते, एवममूर्तोऽपि शिवः कार्यं क्षित्यङ्कुरादिकं जगत् स्वकीययेच्छाशक्त्या निर्मिमीते।

अत्र प्रपञ्चस्य ईश्वरो निमित्तकारणम्, शक्तयः सहकारिकारणम्, बिन्दुरुपादानकारणं भवति। तत्रापि शुद्धेऽध्वनि शिवस्य निमित्तत्वं बिन्दोरुपादानत्वम्, अशुद्धेऽध्वनि तु अनन्तस्य निमित्तत्वं मायायाश्च उपादानत्वं वेदितव्यम्। शिवशक्तिसदाशिवेश्वरशुद्धविद्याख्यानि पञ्च तत्त्वानि शुद्धानि, मायादिपृथिव्यन्तानि चैकत्रिंशत्तत्त्वान्यशुद्धान्यभिधीयन्ते। स चेश्वरो जगज्जन्मस्थितिध्वंसतिरोधानविमुक्त्याख्यानि कृत्यानि करोति।

अत्र जगच्छब्देन जन्मवज्जन्तुचक्रमुच्यते। तस्य जन्म शिवस्यैकं कृत्यम्। स्वसृष्टस्य सर्वलोकस्य पुरुषार्थप्रसिद्धये व्यापारप्रसिद्धये नियोजनं स्थापनं द्वितीयं कृत्यम्। ध्वंसः स्थित्यन्ते शुद्धाशुद्धाध्वभोगसाधनतनुकरण भुवनादीनां विन्दुमायात्मककारणे विलयनद्वारा भवाध्वभ्रमण श्रान्तानां संसारिणां विश्रामायावस्थापनं तृतीयं कृत्यम्। अयमेव च ध्वंसः प्रलय इत्युच्यते। त्रिविधोऽयं प्रलयो मतङ्गपारमेश्वरे विद्यापादे पञ्चविंशे पटले विस्तरेण प्रतिपादितः। सच महाप्रलये माया-पुरुष-शिवव्यतिरेकेण सर्वेषामुपसंहारो भवति। तदुक्तं तत्त्वप्रकाशे—

**माया पुरुषः शिव इत्येतत्त्रितयं महार्थसंहारे।**
**अवशिष्यते पुनस्तत् प्रवर्तते पूर्ववत् सृष्टौ॥ ६९॥**

तिरोभावः पाशानुग्रहेण पशूनां यथानुरूपाद् भोगादप्रच्युतिश्चतुर्थं कृत्यम्। अयमेव संरक्षणाख्यायाऽन्यत्रोक्तः। विमुक्तिश्चानुध्यानमनुग्रहः पाशतिरोधानेनाणूनां परापरमोक्षदानम्। तत्रापरमोक्षः षड्विधः, परस्त्वेकविध इति सप्तप्रकारोऽयं मोक्षो मतङ्गपारमेश्वरे (यो. ५।६३-६७) वर्णितः। इदमनुग्रहरूपं कृत्यं शिवः सृष्टिकाले संहारकालेऽपि च करोतीति मृगेन्द्रे (वि. ५।२-३) प्रतिपाद्यते। पौष्करे तु प्रत्ययकालेऽपि शिवस्य पञ्च कृत्यानि प्रवर्तन्त इति निर्दिष्टम्। एवं प्रकारकस्य पतिस्वरूपस्यावबोधेन पाशेभ्यो विमुच्यन्ते पशवः।

शरीरव्यतिरिक्तः अनश्वरो नित्यो न तु बौद्धानामिव क्षणिकः, व्यापी न तु जैनानामिव शरीरमात्रपरिमाणः, विभिन्नोऽनेको न तु वेदान्तिनामिवैकः, समलो मलेन सहितोऽज्ञानेनावृत्तः अजडोज्ञानक्रियास्वभावः, स्वार्जितस्य धर्माधर्मात्मकस्य कर्मणः फलभोक्ता, धर्माधर्मात्मकस्य कर्मणः सम्पादयिता, अल्पज्ञो न तु सर्वज्ञः, ईश्वरेण प्रेरितश्च भोगं मोक्षं च भुञ्जानः पुरुषो जीवात्मा पशुरित्युच्यते शैवागमेषु। विज्ञानाकलप्रलयाकल सकलभेदात् पशुरयं त्रिविधो भवति। तत्र प्रथमो विज्ञानयोगसंन्यासैर्भोगेन वा कर्मक्षये सति कलादिभोगबन्धस्याभावात् केवलमलमात्रयुक्तो विज्ञानाकल इति व्यपदिश्यते। द्वितीयस्तु प्रलयेन कलादेरुपसंहारान्मलकर्मयुक्तः

प्रलयाकल इति व्यवह्रियते। तृतीयश्च मलमायाकर्मात्मकबन्धत्रयसहितः सकल इति संलप्यते।

मल-तिरोधानशक्ति-महामाया (बिन्दु)-माया-कर्माणि पञ्चापि पुरुषबन्धकतयाऽस्मिन् शास्त्रे पाशपञ्चकत्वेन प्रसिद्धानि। यदुच्यते—"मलः कर्म महामाया मायोत्थमखिलं जगत्। तिरोधानकरी शक्तिः पाशत्वेनार्थपञ्चकम्॥" इति। तत्र पाशत्वं नामशिवानन्दाभिव्यक्ति-विरोधित्वम्। तच्चाणवमलस्याच्छादकतया, तिरोधायकशक्तेस्तु तत्प्रेरक-त्वेन, बिन्दुमायाकर्मणामपि भोगभोग्यसम्पादनद्वारा वैषयिकसुखादिजन-कत्वेन च बोध्यम्। तत्र चत्वारः पदार्था जडरूपाः, तिरोधायक शक्तिस्तु चिद्रूपाऽपि पाशानुग्राहकत्वात् पाश इत्युपचर्यते। प्रथमो मलाख्यः पाश आणव नाम्नाऽपि प्रसिद्ध्यति। अस्य चाणवोक्तिर्विभोरात्मनोऽणुत्व सम्पादनात्। अत्र महामायामनुपादाय पाशचतुष्टयं मृगेन्द्रागमादिषु वर्ण्यते। तिरोधायकशक्तेरपि पाशत्वमौपचारिकमेव। अत एव मल-कर्म-मायारूपस्त्रिविध एव पाशः स्वायम्भुवागमे वर्णितः—"मायेयमाणवं कर्म चैतावदणुबन्धनम्" इति। अथात्ममलमायाख्येत्यादिके रौरवस्वायम्भुव-वचनेऽपि पाशत्रयमेव निदर्श्यते। प्रयोगमञ्जरीकारेणापि त्रय एव पाशाः स्वीकृताः। मलपदेनाणवं मलं संगृह्य कर्ममायापदाभ्यां सह मलपदं च संयोज्य आणव-मायीय-कार्माख्यास्त्रयो मलाः प्रतिपाद्यन्ते त्रिकादिदर्शनेषु। अत्रापि केवलाणवमलयुक्तो विज्ञानाकलः, आणवकार्ममलसंवलितः प्रलया-कलः, त्रिविधमलसंयुक्तश्च सकल इति त्रिविधः पशुः प्रतिपादित एव। शाक्तदर्शनेष्वपि मलत्रयमेतत् प्रतिपाद्यते।

एतेषां पाशानामसंस्पर्शे शिवसाम्यरूपं मोक्षं क्रमेणायमात्मा प्राप्नोति। अस्यां स्थितावपि स शिवात् पृथगेव सन्तिष्ठते। अतो मोक्षेऽपि पशोः शिवात् पृथक् सत्तास्वीकाराद् द्वैतमिदं दर्शनम्। आत्मा यदा कर्मसाम्यमलपरिपाकाभ्यां युज्यते तदा तस्मिन्ननुग्रहाख्या पारमेश्वरी शक्तिः पतति। शक्तिपात इति समाख्यया तदागमेषु परिचीयते। तत्र कर्म साम्यं नाम समवेतयोर्विरुद्धफलयोः पुण्यरूपयोरपुण्यरूपयोः पुण्यापुण्य-रूपयोर्वा युगपत् फलौन्मुख्यम्। इदं च तिरोधानशक्तिनिवर्तनद्वाराऽनुग्रह शक्तिनिपाते हेतुः। अस्य च शक्तिपातस्य संसारविद्वेष-मुमुक्षाशिवभक्त्या-

दीनि चिह्नानि। एतैश्चिह्नैरञ्चितं संजात शक्तिपातं शिष्यं विलोक्य गुरुस्तं दीक्षयति, षडध्वशुद्धिमुखेन क्रियाकलापेन तस्य मलान् विशोधयति। शैवेषु वैष्णवेषु चागमेषु कर्मणां भोगहेतुत्ववत् कर्मसाम्यावस्थायां मोक्ष-हेतुत्वमपि स्वीक्रियते। आचार्यशिष्ययोरुभयोरपि सम्बन्धसम्पादकोऽत्र शिवस्वरूपो मन्त्र एवाभिमन्यते। शक्तिपात समन्वितो हि शिष्यो देशिक-मनुप्राप्य दीक्षाक्षपितकल्मषो निर्मलः सन् शिवसाम्यं लभते। शिवस्येव जीवानामपि सार्वज्ञ्यादिकं पूर्वमेवास्ति। किन्तु संसारदशायां मलरुद्धं न प्रकाशते। मुक्तौ तु मलविगमेनाभिव्यज्यते। तस्मात् स्वीयगुणाभिव्यक्त्या शिवसाम्यमिति सिद्धान्तशैवा अभिब्यक्त्या शिवसाम्यमङ्गीकुर्वते।

"दशाष्टादशवस्वष्टभिन्नं यच्छासनं विभोः। तत्सारं त्रिकशास्त्रं हि तत्सारं मालिनीमतम्॥" (१।१८) इति तन्त्रालोकेऽभिनवगुप्वो वक्ति। मालिनीमते च—"उच्चारकरणध्यानवर्णस्थानप्रकल्पनैः। यो भवेत् स समावेशः सम्यगाऽणव उच्यते॥ उच्चाररहितं वस्तु चेतसैवविचिन्तयन्। यं समावेशमाप्नोति शाक्तः सोऽत्राभिधीयते॥ अकिञ्चिच्चिन्तकस्यैव गुरुणा प्रतिबोधतः। जायते यः समावेशः शाम्भवोऽसावुदाहृतः॥" (२।२१-२३) इत्येवं समावेशमुखेन आणव-शाक्त-शाम्भवोपायानां स्वरूपं निर्दिष्टम्। सोऽयं विषयस्तन्त्रालोके द्वितीयादि द्वादशाह्निकपर्यन्तमतीव विस्तरेण, तन्त्रसारे (पृ. ८-११४) नातिविस्तरेण महार्थमञ्जरीपरिमले (पृ. १३८-१५३) च संक्षेपेणानुपायप्रक्रियया सह वर्णितो द्रष्टव्यः।

अत्र तदुपायचतुष्टयलभ्यं परतत्त्व स्वरूपं त्रिपुरा-क्रमकुल-त्रिक साधारणं विशिष्टं च निरूप्यते। शैवेषु शाक्तेषु चाद्वैतागमदर्शनेषु प्रकाशशब्दः शिवतत्त्ववाचकत्वेन, विमर्शशब्दश्च शक्तितत्त्व वाचिकत्वेन प्रसिद्धः। शिवपारम्यवादिनः शैवाः, शक्तिपारम्यवादिनः शाक्ता उच्यन्ते। तत्र शाक्ते सम्प्रदाये षडध्वान्तःपाति षट्त्रिंशत्तत्त्वातीतं ब्रह्म संविद्रूपम्, शैवे तु सम्प्रदाये परमशिवस्वरूपम्। भट्टप्रद्युम्नेन तत्त्वगर्भे षट्त्रिंशत्तत्त्वानां संविच्छक्तिप्रसरमात्रत्वमङ्गीक्रियते। एवं च शाक्तेषु दर्शनेषु संविदभिधानं परं ब्रह्म। तत एव सर्वं प्रवर्तते। संविदियं शैवैरपि नापलपितुं शक्या। अत एवोक्तमभिनवगुप्तेन प्रत्यभिज्ञाविवृतिविमर्शिन्-याम्—"इह भावानां सत्त्वमसत्त्वं वा व्यवतिष्ठमानं संविद्विश्रान्तिमन्तरेण

नोपपद्यते। संविद्विश्रान्ता हि भावाः प्रकाशमाना भवन्ति। प्रकाशमानता चैषां संविदभेद एव। प्रकाश एव संविद्यतः।...तदमी प्रकाश एव तावद् विश्रान्ता भावाः। प्रकाशश्च विमर्शशून्यो न भवति।...संविदो विमर्शपयन्तत्वात्" (भा. १, पृ. ४-६) इति। अत्र तेन शिवपारम्यानुसारं संविदः प्रकाशविमर्शात्मकत्वं साध्यते। शाक्ते तु दर्शने संविदः षट्त्रिंशत्तत्त्वातीतत्वात् प्रकाशविमर्शात्मकस्य शिवशक्तिरूपस्याद्यस्य तत्त्वद्वयस्यापि तत्प्रसरमात्रत्वमेव सिद्ध्यति। अत एव योगिनीहृदय- ऋजुविमर्शिन्यादिषु तत्र तत्र मन्त्रमातृका-मुद्रा-चक्रादीनां संविदात्मकत्वमेव प्रदर्श्यते।

देशकालाकारैरनियन्त्रितस्वभावत्वान्महत्त्वोपेता त्रित्वावस्थितसमस्तधर्मपूरणी चिदानन्दघनस्वात्मपरमार्था स्पृहणीयतया हृदयहारिणी संविदेव महात्रिपुरसुन्दरीपदाभिलप्या देवता त्रैपुरे दर्शने। संविदेव भगवती स्वान्तः स्थितं विश्वं बहिः प्रकाशयतीति हि शाक्तदर्शनरहस्यम्। सोऽयं शक्तिपारम्यपक्षो नित्याषोडशिकार्णवे चतुर्थे पटले—"त्रिपुरा परमा शक्तिराद्या जातादितः प्रिये '(४।४) इत्यादिना 'एवं देवी त्र्यक्षरा तु महात्रिपुरसुन्दरी" (४।१८) इत्यन्तेन ग्रन्थेन सम्यग् व्याख्यातः। यदाधृत्य 'शिवः शक्त्यायुक्तो यदि भवति शक्तः प्रभवितुं न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि' (सौ.ल. १) इत्यादीनि स्तुतिवचांसि प्रसरन्ति।

एवं च वाभकेश्वरदर्शने त्रिपुराभिधाना परा संविदेव परब्रह्मेत्युच्यते। "त्रिमूर्तिसर्गाच्च पुराभवत्वात् त्रयीमयत्वाच्च पुरैव देव्याः। लये त्रिलोक्या अपि पूरकत्वात् प्रायोऽम्बिकायास्त्रिपुरेति नामा। शिवशक्त्यात्मसंज्ञेयं तत्त्वत्रितयपूरणात्। त्रिलोकजननी चाथ तेन सा त्रिपुरा स्मृता॥" इति च त्रिपुरानिर्वचनप्रतिपादकौ श्लोकौ प्रसिद्धौ। त्रिपुरापदस्य नानाविधा निरुक्तयो दृश्यन्ते। तत्र त्रिशक्ति-त्रिचक्र-त्रिधाम-त्रिबीज-त्रितत्त्व-त्रिगुणत्रिकोण-त्रिमूर्ति प्रभृतीनां त्रित्व संख्याविशिष्टानां सर्वेषामेव पदार्थानां जननी सा निरुच्यते।

एवमेव त्रिकदर्शनमपि त्रित्वसंख्याप्रियम्। तथाहि-सिद्धा-नामकमालिनीतिविख्याततन्त्रत्रयाश्रितत्वात्, पर-परापर-अपररूपत्रिकप्रतिपादकत्वात्, तदन्तर्गतस्य त्रिकत्रयस्य-शिवशक्तितत्सामरस्यरूपस्य, शिवशक्तिनररूपस्य परा-अपरा-परापरादेवीरूपस्यच व्याख्यायां प्रधान्येन प्रवृत्तत्वात्,

भेद-भेदाभेद-अभेदरूपस्य त्रिप्रकारस्यापि ज्ञानस्य दार्शनिकदृशा स्पष्टीकरणाच्चेदं त्रिकदर्शनतया प्रख्यायते ।

त्रैपुरे साम्प्रदाये सङ्केतपद्धतिं योगिनीहृदयं चानुसरन्तः शिवानन्द-विद्यानन्द-अमृतानन्द-भास्कररायप्रभृतय आचार्या अनाख्यं तुरीयं समष्टि स्वरूपं वा तत्त्वमेकमधिकं परिगणय्य धाम-तत्त्व-पीठ-लिङ्ग-शक्ति-वीजादिकस्य चातुर्विध्यमङ्गीकुर्वन्ति । "क्रमः चतुष्टयार्थः, (त. वि. १।१०६) इति च जयरथो भणति । क्रमस्त्र्यर्थः, चतुष्टयार्थः, पञ्चार्थ इति त्रयः पक्षा डॉ. नवजीवनरस्तोगीग्रन्थे (पृ. १०-१३, ७२) टिप्पणीषु प्रदर्शिताः 'तत्राद्यं पक्षद्वयं पूर्वोक्तमतद्वयमनुसरति । तन्त्रालोके तद्विवेके च क्रमश्चतुष्टयार्थं इत्येष पक्षो व्याख्यातः ।

महेश्वरानन्दादिभिस्तु लकुलीशपाशुपतदर्शनवत् पदार्थपञ्चकस्य तद्भिन्नप्रकृतिकस्यप्रतिपादकतया क्रमदर्शनं व्याख्यायते । तद्यथा—क्रमदर्शनाभ्युपगताः परतत्त्वस्य स्फुरणधारा व्योमवामेश्वरीखेचरी-दिकचरी-गोचरी भूचरी नाम्न्यः पञ्च । परशक्तयः सृष्टि-स्थितिसंहार-अनाख्या-भासारूपाः पञ्च । वाग्भेदाः परा-सूक्ष्मा-पश्यन्ती-मध्यमा-वैखरीरूपाः पञ्च । क्रमेणार्च्यदेवताचक्राणि श्रीपीठ-पञ्चवाह-नेत्रत्रय-वृन्दचत्र-गुरुपङ्क्तिरूपाणि पञ्च । परतत्त्वस्वरूपत्वेन तदभेदेन विद्यमानाः शक्तयश्चित्-आनन्द-इच्छा-ज्ञान-क्रियारूपाः पञ्च । इयं पञ्चकधारा मौलिकस्य काल्याः क्षेप-ज्ञान-प्रसंख्यान-गति-नादरूपकृत्यपञ्चकविचारस्य प्रभावात् प्रसूतेति प्रतीयते । पाशुपतं हि पदार्थपञ्चकमष्टगणेषु विभक्तं भिन्न प्रकृतिकमेव ।

त्रिविधानां चतुसंख्याकानां पञ्चप्रकाराणां चैषां पदार्थानां व्याख्यानमुखेनैव प्रवर्तते त्रिपुरा-त्रिक-क्रमदर्शनानां वैशिष्ट्यम् । किञ्च, "यत्पीठचक्रार्पितपञ्च वाहप्रकाशमानन्दखमूर्तिचक्रम् । अष्टाष्ट चक्रं प्रविराजते तद् गुरुक्रमौघं सञ्चतुष्टयार्थम् ॥" इति महाम्नायोक्तिमुद्धरन् महेश्वरानन्दः—"श्रीपीठपञ्चवाहनेत्रत्रयवृन्दचक्राणि स्मरत । स्मरत च गुरूणां पङ्क्तिं पञ्च च सृष्टीः सृष्टि प्रमुखाः ॥" (गा. ३६) इत्यादि गाथाव्याख्यानमुखेन—"धाममुद्रावर्णकलासंविद्भावस्वभावतः । पाताऽनिकेतदृष्ट्या च वृन्दचक्रं प्रकाशितम् ॥" इति वचनं च स्मरन् क्रमदर्शन

वैशिष्ट्यं विशेषतः प्रकटयतीति तत् तत्रैव द्रष्टव्यम्। अस्माभिश्च शाक्त-दर्शनपरिभाषा कोशे हिन्दीभाषामये त इमे शब्दा व्याख्याताः।

अत्र परमेश्वरः पूर्णसंवित्स्वभावः। पूर्णतैवास्य शक्तिः कुलम्, सामर्थ्यम्, ऊर्मिः, हृदयम्, सारम्, स्पन्दः, विभूतिः, त्रीशिका, काली, कर्षणी, चण्डी, वाणी, भोगः, दृक्, नित्या-इत्यादिभिरागमभाषाभिस्तत्तद-न्वर्थप्रवृत्ताभिरभिधीयते। क्रमदर्शनमेतत् प्राधान्येन त्रिकदर्शनमनुसरतीति महेश्वरानन्दो भाषते—"श्रीमहार्थत्रिकदर्शनयोर्नात्यन्तं भेदप्रथा" (पृ.६२) इति। कौलदर्शनतोऽप्यस्य नात्यन्तं वैलक्षण्यमित्यप्युक्तं तेनैव—'अस्यामर्थ-स्थितिः सैव या सर्वत्र कुलागमे। किन्तु शब्दस्य शय्यान्या नात्यन्तं सा विभिद्यते॥" (पृ. १६२) इति।

कौलागमे चानुत्तरमेव परमं तत्त्वम्। अनुत्तरा च परा प्रतिभा परावागपरपर्याया वर्तते तस्य शक्तिः। प्रकाशविमर्शयोरिवानयोः साम-रस्यमद्वयत्वं चोपेयते। अत एवानुत्तराभिधमिदं षट्त्रिंशत्तत्त्वातीतं सप्त-त्रिंशं तत्त्वम्। अनुत्तरः शिवोऽत्र कुलाकुल पदाभ्यां सूच्यते, तेन सामरस्य-मापन्ना च शक्तिः कौलिकीत्यभिधीयते। तदुक्तं तन्त्रालोके—"अकुलस्यास्य देवस्य कुलप्रथनशालिनी। कौलिकी सा परा शक्तिरवियुक्तो यया प्रभुः॥" (३।६७) इति, नौम्यनुत्तरनाथस्य रश्मिचक्रमहं सदा। शिवशक्तीति विख्यातं परापरफलप्रदम्॥" यत्रोदितमिदं चित्रं विश्वं यत्रास्तमेति च तत्कुलं विद्धि सर्वज्ञ शिवशक्ति विवर्जितम्॥" इति च तद्व्याख्याने विवेके। अस्यानुत्तरतत्त्वस्य विशिष्टं स्वरूपमभिनवगुप्तकृते परात्रिंशिकाव्याख्याने द्रष्टव्यम्।

तदेतेषु त्रिपुरा-त्रिक-क्रम-कुलदर्शनेष्वद्वयवादिषु बन्धमोक्षयोर्नास्ति काचन वास्तविकी सत्ता। तथाहि—"वस्तुस्थित्या न बन्धोऽस्ति तदभावान्न मुक्तता" इत्यात्मसप्तत्याम्, "बन्धनं बन्धकृद् बध्यस्त्रिष्व-प्येको न भिद्यते। स्वविकल्पकृतैर्बन्धैर्बध्यते त्वनिशं जगत्॥" इति च स्वस्वभावसंबोधने श्रूयते।" नान्यत्र गमनं स्थानं मोक्षोऽस्ति सुरसुन्दरि। अज्ञानग्रन्थिभेदो यः स मोक्ष इति कथ्यते॥" इति च सर्वज्ञभैरवे। 'नान्यत्र गत्या मोक्षोऽस्ति सोऽज्ञानग्रन्थिकर्तनात्। तच्च संविद्विकासेन श्रीमद्वीरा-वलीपदे।" इति वीरावलीवचनं चात्रानुसन्धेयम्। शैववैष्णवयोरुभयोरपि

परमार्थसारयोः—"मोक्षस्य नैव किञ्चिद्, धामास्ति न चापि गमनमन्यत्र । अज्ञानग्रन्थिभिदा स्वशक्त्यभिव्यक्तता मोक्षः ॥" (श्लो. ६०) इत्युक्तिरवलोक्यते । तत्र वैष्णवे परमार्थसारे—"अज्ञानमयग्रन्थेर्भेदो यस्तं विदुर्मोक्षम्" (श्लो. ७३) इत्युत्तरार्धपाठः ।

तदेतद्विशालं दार्शनिकं वाङ्मयं विस्मृतिगर्ते निपतितमिव, विद्वद्भिरुपेक्षितमिव साम्प्रतमास्ते । येन हि विना बौद्धमहायानवज्रयानशाखयोः, जैनधर्मस्य, पौराणिकधर्मस्य च विकासक्रमो नैव याथार्थ्येन ज्ञातुं शक्यते । बौद्धजैनधर्मयोः स्वरूप परिवर्तने पौराणिकधर्मस्य प्रतिष्ठायां च कियान् वर्तते नाम आगमिकस्यास्य वाङ्मयस्य प्रभाव इति नाद्यावध्यवधारितम् । दक्षिणे भारते वैष्णवानां शैवानां च भक्तानाम्, उत्तरे भारते सिद्धानां नाथानामन्येषां च प्रभुभक्तानाम्, इस्लाममतानुवर्तिनां सूफीभक्तानां च वाङ्मयस्याध्ययनं साम्प्रतं वेदान्तस्य पौराणिकधर्मस्य वा छत्रच्छायायां विधीयते । किन्तु शाङ्कराद्वैतमपहाय वेदान्तस्य सर्वाः शाखा वैष्णवैः शैवैश्चागमैः प्रभाविताः, वैष्णवानां शैवानां सिद्धानां नाथानां च वाङ्मयं तानेतानागमग्रन्थानेव सार्वात्म्येनानुसरतीति इदम्प्रथमतया श्रद्धेयैः कविराज महादयैर्मौखिकेषूपदेषु निबन्धेषु च वितानितम् । सूफीमतमपि शाङ्कराद्वैतदर्शनापेक्षया प्रत्यभिज्ञादर्शनमद्वैतवादिनं शाक्तं च दर्शनं वस्तुतोऽनुधावतीति ते प्रत्यपीपदन् । वज्रयानसहजयानकालचक्रयानानांशाक्तदर्शनानुस्यूततामपि ते निर्दिष्टवन्तः । वेदोत्तरकालीनस्य सम्पूर्णस्य भारतीयस्य वाङ्मयस्य तैर्निर्धारितेनानेन पथा परिशीलनं नितान्तमपेक्षितम् । साम्प्रतमेतावदेवोक्त्वा विरम्यते ।

**इत्थमागमदृक् सूक्ष्मा व्रजवल्लभशर्मणा ।**
**व्याख्याता श्रेयसे भूयात् सर्वेषामभयाय च ॥**

# विषयानुक्रमणिका

## Vol. XIII

## उपोद्घातप्रकरणम्

## Vol. XIV Part I

### उदय प्रकरणम्

# भारतराष्ट्रिय कांग्रसीयेतिहासः
# राष्ट्रीयान्दोलनकथा

## उदय प्रकरणम्

के० कस्तूरीरंगाचार्यः
"श्री रंगमुनि":

**सभावैलक्षण्यम्—**

उपसप्ततिसंख्याकाः नानाप्रान्तनिवासिनः ।
सभां तां शोभयामासुः राष्ट्रीयहितचिन्तकाः ॥ ३०८ ॥

अन्ये चैव महाभागाः त्रिशत् संख्याः समागताः ।
प्रातिनिध्यं विना तत्र प्रेक्षकाः मार्गदर्शिनः ॥ ३०९ ॥

जन प्रतिनिधीनां सा सभासंयोजिता तदा ।
भारतस्येतिहासेषु नैव दृष्टा न च श्रुता ॥ ३१० ॥

इन्द्रप्रस्थे च साकेते विदर्भे संगता पुरा ।
ततो विलक्षणैवेयं जनप्रतिभुवां सभा ॥ ३११ ॥

नैते दिदृक्षवो राज्ञां द्यूतं वा न स्वयंवरम् ।
न महाभारतं कर्तुं, किन्त्वस्मद् भारतं महत् ॥ ३१२ ॥

दिदृक्षवो न पाञ्चालीं हृतवस्त्रामुपेक्षिताम् ।
रिरक्षिषन्तः सम्मानं मातृभूमेः स्वतंत्रताम् ॥ ३१३ ॥

इदम्प्रथमसम्भूता प्रवृत्तिर्भारतौकसाम् ।
पंजाबी चैव मद्रासी वंगीयो गूर्जरो ययत ॥ ३१४ ॥

निजसंस्कृतभाषायाः शिक्षणालयमण्डपे ।
सल्पप्य परभाषायां सनेता न युयुत्सवः ॥ ३१५ ॥

परन्तु भारतान् सर्वान् एकसूत्रे युयुक्षवः ।
नादृश्यलोकसंप्राप्त्यै यतमाना मुमुक्षवः ॥ ३१६ ॥

न यो ज्जीवनमार्गस्य समस्याः विचिकित्सवः ।
परन्तु जीवने दृष्टान् दोषान् परिजिहीर्षवः ॥ ३१७ ॥

संख्ययाऽल्पीयसी सा तु गाम्भीर्येण गरीयसी ।
कालेन नित्या, कार्येणानन्यसाधारणा मता ॥ ३१८ ॥

इयं सा यत्र बहवः संगता देशसेवकाः ।
स्वरक्तैः सेचयिष्यन्ति देश भक्त्यङ्कुरान् मुदा ॥ ३१९ ॥

इयमेव च सा यस्याः श्रेष्ठो नेता भविष्यति ।
महात्मा मोहनः कर्म चन्द्रगांधी महोदयः ॥ ३२० ॥

परीक्षिष्यत्यहिंसायाः सत्यस्य च महद्‌वलम् ।
लवणार्थे च संघर्षं शासकैर्यः सुदुष्करम् ॥ ३२१ ॥

विधाय महतीं कीर्ति मवाप्य च, महर्षिभिः ।
**नाडोग्रन्थे** तदुल्लेखं कृतं सत्यापयिष्यति ॥ ३२२ ॥

इयं सा यत्कृते नेहरू जवाहरः प्रार्पयिष्यति ।
स्वजीवनं, स्वसम्पत्ति, स्वस्यैवानुपमां **सुताम्** ॥ ३२३ ॥

**सभावर्णनम्—**

पूर्वीयाः पश्चिमाश्चैव दाक्षिणात्या स्तथौत्तराः ।
प्रमुखाः संगतास्तत्र सभाया अधिवेशने ॥ ३२४ ॥

विविधैश्च शिरस्त्राणैः विविधैस्तिलकैरपि ।
विविधैः श्मश्रुभिश्चापि विविधैः कंचुकैरपि ॥ ३२५ ॥

विविधाभिश्च भाषाभिः विविधैर्वेषभूषणैः ।
संशोभमाना सभ्यानां ऐकमत्येन योजिता ॥ ३२६ ॥

नानासुगन्धयुक्तैश्च नानावर्णयुतैरपि ।
नानाकारैः पुष्पगुच्छैः तन्तुनैकेन गुम्फिता ॥ ३२७ ॥

मुकुटे भारतीमातुः धारणार्थं विनिर्मिता ।
महती पट्टमालेव व्यराजत महासभा ॥ ३२८ ॥

पंक्तिः प्रतिनिधीनां सा संगता सफलोद्यमा ।
अन्तर्हितमहावृक्षा वीजपङ्क्तिरिवाबभौ ॥ ३२९ ॥

**प्रथममधिवेशनम्=**

**केषांचित् प्रतिनिधीनां परिचयः ।**

ह्यूम् असौ प्रतिनिधिस्तत्र प्रथमो ह्यूम् महाशयः ।
यत्प्रयत्नेन महता सभा सत्तामुपागता ॥ ३३० ॥

काङ्ग्रेस् सभायाः पितरं यं मन्यन्तेऽत्र तद्विदः ।
राजप्रतिनिधेश्चापि तदर्थे प्राप्त सम्मतिम् ॥ ३३१ ॥

योऽसौ सम्वोधयामास विश्वविद्यालयस्थितान् ।
छात्रान् भारतसेवार्थे पत्रिकासु निवेदयन् ॥ ३३२ ॥

यस्तु दुर्योधनादीनां समाजे विदुरो यथा ।
यूरोपीय समाजेषु धर्मपक्षं समर्थयन् ॥ ३३३ ॥

स्वयं सम्पादयामास विरोधं स्वजनैः सह ।
स्थानं च भारतीयानां इतिहासेऽतुलं यशः ॥ ३३४ ॥

क्लैव् आदिभिः जितं देशं छलेन च वलेन च ।
प्रेमास्त्रेणैव जितवान् योऽसौ जनहितेच्छुकः ॥ ३३५ ॥

सभायाः सूत्रधारो यो भूत्वैवं वहुवत्सरान् ।
भारतीय हितार्थाय कार्यं संचालयिष्यति ॥ ३३६ ॥

**उमेश चंद्र बानर्जी**

उमेशचन्द्र वानर्जी वंगदेशात् समागतः ।
यः प्रधानेष्वन्यतमः सभाप्रारम्भकर्तृषु ॥ ३३७ ॥

श्मश्रुणाऽलंकृतमुखः प्रांशुः गम्भीरदर्शनः ।
विशालफालस्तेजस्वी वाग्मी विद्याविचक्षणः ॥ ३३८ ॥

वेषेण भाषया चांगचेष्टयाचांगलो यथा ।
परन्तु हृदयेनासौ हिन्दुः पूर्णतया स्थितः ॥ ३३९ ॥

स्तिमितः कार्यकृच्चासौ स्पृहणीयगुणोत्तरः ।
सर्वेषाँ च सदस्यानां दृष्टिध्यानापहारकः ।। ३४० ।।

सभायाः प्रथमं लक्ष्यं सुस्पष्टं निश्चिकाय यः ।
आद्येऽष्टमेच संवेशेऽप्यध्यक्षो यो भविष्यति ।। ३४१ ।।

**दादा भाई नौरोजी**

दादा भाई, स, नौरोजी पारसीकमतानुगः ।
यं मन्यन्तेऽत्र राष्ट्रीयभावनायाः पितामहम् ।। ३४२ ।।

योऽसौ कृशोऽपि पैजामावेष्टनाद्भाति पीवरः ।
वामनोऽपि शरीरेण यशसा तु त्रिविक्रमः ।। ३४३ ।।

वृद्धोऽपिवयसा,ऽऽभाति युवेवोत्साहशक्तिमान् ।
श्मश्रुणा धवलेनाऽपि दर्शयन् पक्वबुद्धिताम् ।। ३४४ ।।

पारसीकञ्चुकाच्छन्नः गुर्जरीटोपिकाऽऽवृतः ।
देशभक्तेषु यन्नामप्रथमं गण्यते बुधैः ।। ३४५ ।।

कांग्रसीयपताकेयं डीयमाना सदा भवेत् ।
भारते चांग्लदेशे च यत्प्रभावविशेषतः ।। ३४६ ।।

पश्चात् त्रिवारं आध्यक्ष्ये यं वरिष्यत्यसौ सभा ।
यस्तु स्वजीवनं यावत् भविता राष्ट्रसेवकः ।। ३४७ ।।

**सर् फिरोजशाह् मेहता**

असौ फेरोज्शाह् मेह्ता पारसीकमतानुगः ।
श्मश्रुणाऽलंकृत मुखः टोपीसंवृतमस्तकः ।। ३४८ ।।

आकारेण च धैर्येण प्रांशुः दृश्यो यथांऽऽगलः ।
उमेशचन्द्रस्य पुरः प्रतिवादीव सुस्थितः ।। ३४९ ।।

मुम्बानगरपालिन्याः अध्यक्षः नीतिशास्त्रवित् ।
कांग्रसीय विचाराणां प्राणदाता प्रवर्तकः ।। ३५० ।।

षष्ठेऽधिवेशने योऽयं भविष्यति सभापतिः ।
समितौ शिष्टमंडल्यां स्थित्वा सेवां करिष्यति ।। ३५१ ।।

**न्यायाधीश: काशीनाथ त्र्यंबकस्तैलंग: —**

काशीनाथस्त्र्यंबकोऽसौ न्यायाधीशो विचक्षण: ।
जंघानालेन धवलपरिधानेन शोभित: ॥ ३५२ ॥

चीन कञ्चुकसञ्चन्न: टोपीसंवृतमस्तक: ।
वाण्या: विनोद पूर्णाया: प्रयोगे कुशलो मत: ॥ ३५३ ॥

कांग्रस् सभास्थापकानां प्रधानोऽन्यतमश्च य: ।
सभाया: कार्य भाराणां मुख्यो वोढा भविष्यति ॥ ३५४ ॥

आंग्लै: कृतानां केषांचिदाक्षेपाणां च खंडने ।
स्ववाग्मित्वं पटुत्वं च येन सन्दर्शयिष्यते ॥ ३५५ ॥

**मुरलीधरलाल:—**

मुरलीधर लालोऽसौ अम्बालात: समागत: ।
पञ्जाबी कञ्चुकेनाऽपि पैजामेनाऽपि वेष्टित: ॥ ३५६ ॥

उष्णीषेण च काबूलीरीतिनाऽऽवृतमस्तक: ।
सर्वेषां ध्यानमाकर्षन् सभायां राजते भृशम् ॥ ३५७ ॥

विनोदोत्साहयुक्तैश्च हास्यपूर्णैर्वचोऽमृतै: ।
सर्वान् संह्लादयन् सभ्यान् शस्यमानो महाजनै: ॥ ३५८ ॥

**एम-वीरराघवाचार्य: ।**

एम्० वीरराघवाचार्य: 'हिन्दू' संस्था प्रवर्तक: ।
उष्णीषणातिधवलेनोर्ध्वपुंड्रेणशोभित: ॥ ३५९ ॥

मद्रास् महाजनसभास्थापक: पोषकस्तथा ।
जि० सुब्रह्मण्यविप्रोऽपि यस्य मूर्तिरिवापर: ॥ ३६० ॥

**जि० सुब्रह्मण्य अय्यर्—**

सुब्रह्मण्यार्यवर्योऽयं मदरास्त: समागत: ।
यो हिन्दू पत्र संस्थाया: स्थापको लेखकाग्रणी: ॥ ३६१ ॥

जात: पञ्चनदक्षेत्रे, द्वयं यत्र पवित्रितम् ।
त्यागराजस्य गीतेन गगनं चरणेन भू: ॥ ३६२ ॥

यो 'हिन्दू' पत्रिका द्वारा युयुधे शासकैर्दृढम्।
प्रजानां न्यायसिद्ध्यर्थं तासां साहाय्यमाचरन्॥ ३६३॥

भाषाशैली च यस्याभूत् आंग्लदेशे प्रशंसिता।
जिह्वा च यस्य लेखिन्याः कठोरा मृदुला तथा॥ ३६४॥

राष्ट्रीयायाः भावनायाः चेतनायाश्च जागृतेः।
उत्पादकः पोषको यः दक्षिणे तु विशेषतः॥ ३६५॥

**पंडितः आनन्दाचार्लु**

मद्रास् महाजन सभाप्रातिनिध्यं वहन्नयम्।
तत एवागतश्चासौ आनन्दाचार्लु पंडितः॥ ३६६॥

ऊर्ध्वपुंड्रेन धवलेनोष्णीषेण च शोभितः।
प्राचीनस्य नवीनस्य मध्ये सेतुरिव स्थितः॥ ३६७॥

यमेवेयं सभा पश्चादध्यक्षत्वे वरिष्यति।
वागस्त्रेणैव सकलं जगद् यो जेतुमर्हति॥ ३६८॥

**एस० सुब्रह्मण्य अय्यर्**

एस्० सुब्रह्मण्यवर्योऽसौ मदरास्तः समागतः।
उष्णीषेणाऽतिशुभ्रेण फाले चन्दनबिन्दुना॥ ३६९॥

गंगाजलावृतजटः शोभते त्र्यंबको यथा।
पश्चात् मंत्रिपदं त्यक्त्वा देशसेवां करिष्यति॥ ३७१॥

**दिवान् बहादूर० आर्० रघुनाथरावः**

एषोऽपि रघुनाथो रावः मदरास्तः समागतः।
तत्रत्य मंडलाधीश सहायकपदं श्रितः॥ ३७२॥

महाराष्ट्रीयविप्रश्च तंजाऊर् निकट स्थितः।
कदाचिद् इंदौर् संस्थाने सचिवस्य पदं श्रितः॥ ३७३॥

यश्च हिन्दूसमाजस्य विचाराणां सुधारकः।
ब्रह्मज्ञानसमाजस्य कार्यकर्ता धुरन्धरः॥ ३७४॥

यो मन्यते—निजे गेहे ब्रह्मज्ञानसमाजिनाम्।
संमेलनं पूर्ववर्षे यत् संवृत्तं तदेव हि॥ ३७५॥

राष्ट्रैक्यमूलचिन्हं स्यात्, "नैवान्य"दिति साधयन्।
मुम्बय्यामधिवेशस्य प्राथम्यं प्रतिषेधति ॥ ३७६ ॥

**दिनशा एदलजी वाचा—**

अयं तु दिनशा एदल्जी वाचा नाम सुबुद्धिमान्।
यस्यागाधं तलस्पृक् च ज्ञानं वाचामगोचरम् ॥ ३७७ ॥

अर्थनीतौ राजनीतौ करनीतौ विशेषतः।
सैनिकादि विभागेऽपि यद्ज्ञानं सर्वतोमुखम् ॥ ३७८ ॥

सर्वसाधारणे चैव निगूढे विषये तथा।
निस्संशयं च सुस्पष्टं यद्ज्ञानं सर्वतोमुखम् ॥ ३७९ ॥

योऽसौ सप्तदशेऽध्यक्षः संवेशे तु वरिष्यते।
"कांग्रस सभायाः उल्के"ति प्रसिद्धि च गमिष्यति ॥ ३८० ॥

आंग्लैः वशीकृतः पश्चात् सन्त्यक्ष्यति सभामिमाम्।
केंद्रधारासभा सभ्यः नियुक्तः 'नैट्' भविष्यति ॥ ३८१ ॥

**न्यायाधीशः महादेवगोविन्दः रानडे—**

न्यायाधीशो महादेवगोविन्दो रानडे महान्।
महाराष्ट्रकुलोद्भूतः महद्भिरपि पूजितः ॥ ३८२ ॥

अनन्यदृष्टा प्रतिभा सच्चरित्रं च तादृशम्।
द्वितयं संगतम् यत्र परस्परविभाऽऽवहम् ॥ ३८३ ॥

नानामुखी यस्य बुद्धिः वैशाल्यौदार्यसंयुता।
सूक्ष्मेक्षिका विशिष्टा च सततं शस्यते बुधैः ॥ ३८४ ॥

आंग्लद्वीपे क्वचित् ग्रामेऽपि अवाप्स्यद् जन्म यद्ययम्।
अभविष्यत्तु 'डिस्रेली', 'ग्लेड्स्टन्' वेति बुधैः स्तुतः ॥ ३८५ ॥

हिन्दू समाजे दृष्टानां कुरीतीनां सुधारणे।
परिश्रमं करोत्येषः राममोहन रायवत् ॥ ३८६ ॥

सर्वकारस्य सेवायां वर्तमानोऽपि यत्नतः।
कांग्रस सभायाः कार्येषु परां श्रद्धां वहत्ययम् ॥ ३८७ ॥

इतिहासेऽर्थशास्त्रे च विद्वाननुपमः स्मृतः ।
कांग्रसमहा सभायास्तु बाह्यशक्तिरिव स्थितः ।। ३८८ ।।

देशसेवकयूथस्य देश स्वातंत्र्यकांक्षिणः ।
योऽयं पाण्डवयूथस्य कृष्णवत् मार्गदर्शकः ।। ३८९ ।।

'रानडे भवनं' नाम यस्य नाम्ना सदांऽकितम् ।
भवनं मदरास मध्ये भ्राजते भ्राजयत् पुरम् ।। ३९० ।।

**पिं-रंगय्य नायुडु—**

रंगय्यानायुडु रसौ मदरासी महाजनः ।
मद्रास् महाजनसभा स्थापकोऽध्यक्ष एव च ।। ३९१ ।।

यो हिन्दू पत्रिका संस्था सम्वन्धं सुदृढं वहन् ।
पश्चात् निर्वाहसमितेरध्यक्षोऽपि भविष्यति ।। ३९२ ।।

**दिवान् बहादूर पि० केशवपिल्लं—**

अयं तु केशवप्पिल्लै प्राप्तोऽनन्तपुरादितः ।
प्रायः पंच दशान् वर्षान् सेवाँ कुर्वन् निरन्तरम् ।। ३९३ ।।

कांग्रस् सभायाः पश्चाद् यः कार्यदर्शी भविष्यति ।
दीवान् बहादूर् भूत्वा यः सभां त्यक्ष्यत्यतः परम् ।। ३९४ ।।

**मुंशी गंगाप्रसाद वर्मा—**

मुंशी गंगाप्रसादोऽयं वर्मा लख्नौ महाजनः ।
कांग्रस् सभायाः समितौ भजिष्यति सदस्यताम् ।। ३९५ ।।

ततः पदेष्वनेकेषु संस्थासेवापरेषु च ।
स्थित्वा निरन्तरं सेवां करिष्यति महायशाः ।। ३९६ ।।

**जनाब बदराउद्दीन तयाबजी—**

बदराउद्दीन् तयाबजी सः मुसलमानमतानुगः ।
केनाऽपिबन्धुनाऽऽहूतः क्षणात् पूर्वं विनिर्गतः ।। ३९७ ।।

"कांग्रस् सभैव प्रतिभूः मुस्लीमानां भवेद्" इति ।
अचञ्चला मतिर्यस्य; यस्तृतीयाधिवेशने ।। ३९८ ।।

भूत्वा सभापतिः, तत्र विषयाणां विवेचने।
विशोधने समर्थां च समितिं सन्नियोक्ष्यति ॥ ३९९ ॥

कमराउद्दीन् तयाब्जी च तमेवानुजगाम ह।
उभौ "अंजुमन ए इसलाम्" संस्थाप्रतिनिधी मतौ ॥ ४०० ॥

अन्ये च बहवः—

रहीम्तुल्ला सयानी च मलवारी महाशयः।
राव् साहबो वेंकटेशपन्तुलुः गोशल स्तथा ॥ ४०१ ॥

सभापती मुदलियार, पीटर् पाल् पिल्लै नामकः।
तिरुनेल्वेलिवासी च भूस्वामी शिक्षकस्तथा ॥ ४०२ ॥

गङ्गाधरो राव् माडके च पूनावासी वकील् च यः।
मयारामश्च, हीरालाल वीरम्ग्रामात् समागतः ॥ ४०३ ॥

कृष्णस्वामीराय् नामा सेलम् वासी महाजनः।
नरेन्द्रसेनो, गिरिजा भूषणश्चापिवङ्गजौ ॥ ४०४ ॥

डि० एस् वैट् नामधेयश्च मुम्बई नगरस्थितः।
यूरेषीयसमाजस्य प्रमुखः प्रतिभूस्तथा ॥ ४०५ ॥

नरसिंहार्यं वर्यश्च तिरुवल्लूर् महाजनः।
लाला श्रीवैजथश्च तथाऽन्ये च महाशयाः ॥ ४०६ ॥

एवमन्ये महान्तश्च भण्डर्कार्, आपटे, तथा।
आर्काट् सुन्दररामार्यः, अगर्कार्, आदयश्च ये ॥ ४०७ ॥

विद्वद्वरेण्यास्ते सर्वे समलञ्चक्रिरे सभाम्।
वाग्भिः संस्कृतपूताभिः प्रायुञ्जत शुभाशिषः ॥ ४०८ ॥

मराठा, केसरी, हिन्दू, हिन्दुस्तान्यादि पत्रिकाः।
स्वं स्वं प्रतिनिधिं तत्र प्रेषयामासुरुत्सुकाः ॥ ४०९ ॥

प्रथमं अधिवेशनम्-सभा समारम्भः—

कांग्रस् सभायाः प्रथमे संवेशनमहोत्सवे।
नानाप्रान्तादागतानां सभ्यानां स्वागतम् ब्रुवन् ॥ ४१० ॥

लक्ष्यं तस्याधिवेशस्य विवृण्वंश्च विशेषतः।
प्रस्तावं प्रथमं चक्रे प्रथमो ह्यूम् महाशयः॥ ४११॥

उमेशचंद्र बानर्जी नेतृणां प्रथमोह्यसौ।
आध्यक्ष्यं प्रथमं कर्तुमर्हतीति वचोऽब्रवीत्॥ ४१२॥

एस्० सुब्रह्मण्य विप्रेण काशीनाथेन च क्रमात्।
समर्थितं वचस्तस्य पुनरुक्तमिवावभौ॥ ४१३॥

सुमुहूर्तोऽस्त्वयं कालः यदाऽध्यक्षासनं महत्।
महानुमेश चन्द्रोऽयं गृह्णाति स्वजनाज्ञया॥ ४१४॥

नमोऽस्तु सदसे तुभ्यं नमस्तत्पतये तथा।
जयोऽस्तु भारतस्येति घोषः प्रादुरभूत्तदा॥ ४१५॥

नाना प्रान्ताहृतैः पुष्पैः हारैश्च सुमनोहरैः।
अलङ्कृतः स बानर्जी बभौ पुष्पाचलो यथा॥ ४१६॥

**बानर्जी-भाषणम्—**

ततः सभां तां सम्बोध्य बानर्जीवाग्विदां वरः।
शिक्षितायाश्च विद्यायाः प्राप्तस्यानुभवस्य च॥॥ ४१७॥

प्रसक्तावसरस्यापि युक्तरूपं अभाषत।
न वयं सर्वकारस्य विरोधं कर्तु मुद्यताः॥ ४१८॥

न वा विश्वास रहिताः परन्तु हितचिन्तकाः।
मत्तः परतरः कश्चित् मन्मित्रेभ्योऽपि न क्वचित्॥ ४१९॥

विश्वासेन विशिष्टः स्यात् महाब्रित्तन् प्रशासने।
भारतार्थे बहुकृतं महाब्रित्तन् प्रशासकैः॥ ४२०॥

बहु कर्तव्यमप्यस्ति यद स्माभिः प्रतीक्ष्यते।
कदाऽपि सर्वकारेण न संघर्षपरा वयम्॥ ४२१॥

व्यवस्थितेन शान्तेन सांविधानिकवर्त्मना।
शासकेभ्यः स्वाभिलाषानिवेदनपरा वयम्॥ ४२२॥

नानाप्रान्तेषु वसतां देशसेवां चिकीर्षताम्।
सौभ्रातरं च सौहार्दं कर्तव्यं निबिडं दृढम्॥ ४२३॥

प्रान्तधर्मकुलादिभ्यः जन्या या भेदभावना।
निरस्तव्या; पोषणीया राष्ट्रैकत्वस्य भावना॥ ४२४॥

सामाजिकासु मुख्यासु समस्यासु प्रमाणतः।
कार्यः सुपक्वबुद्धीनां विचाराणां च संग्रहः॥ ४२५॥

एवं तस्याधिवेशस्य कार्यं लक्ष्यं च लक्षयन्।
सभाकार्यक्रमं सर्वं बानर्जी व्यवृणोत् ततः॥ ४२६॥

**प्रस्तावाः पारिताः—**

जी० सुब्रह्मण्य विप्रस्तु प्रस्तावं प्रथमं न्यधात्।
इन्दिया कौंसिल् इत्युक्ता समितिः यत्र केंद्रिताः॥ ४२७॥

सर्वेऽधिकाराः तस्यास्तु द्रुतं कार्यं समापनम्॥
राजाधिकृत आयोगः नियोक्तव्यः प्रशासकैः॥ ४२८॥

भारते चाङ्ग्लदेशे च गत्वा शासनपद्धतौ।
विचार्य गुणदोषान् यः शासकेभ्यो निवेदयेत्॥ ४२९॥

काङ्ग्रस् सभायां प्रथम प्रस्तावस्य समर्पणम्।
इति श्रेयस्तु यत्, तस्य सुब्रह्मण्यस्य तद् भवेत्॥ ४३०॥

स्थापनीयः सर्वकारः केंद्रे प्रान्ते च सर्वथा।
योऽसौ उत्तरदायी स्यात् प्रजानां हितचिन्तकः॥ ४३१॥

धारासभासु सर्वासु सभ्येषु बहुसंख्यकाः।
भवेयुः जनसंमत्या प्रेषिता एव नान्यथा॥ ४३२॥

"सेनायामथ निर्वाहे मानाद् अत्यधिको व्ययः।
यो भवत्यस्य कर्तव्या न्यूनताऽवश्यमेव च॥ ४३३॥

"उच्चनिर्वाहक स्थानेषु आङ्ग्लानामेव योजनम्।
इति यत्, तत् परित्यज्य भारतीयान् नियोजयेत्"॥ ४३४॥

सर्वकारस्य सेवार्थे परीक्षा या प्रचाल्यते।
साऽऽङ्ग्लदेशे भारते च सममेव प्रचाल्यताम्॥ ४३५॥

इत्यादयस्तु प्रस्तावाः पारिताः सर्वसम्मताः।
यैः ख्यापिताऽभवत् सम्यक् भारतीयेषु जागृतिः॥ ४३६॥

**सभाविसर्जनात् पश्चात्—**

सभाविसर्जनात् पश्चात् सर्वे सन्तुष्टमानसाः ।
कथयामासुरन्योन्यं प्रशंसन्तश्च तां सभाम् ॥ ४३७ ॥

"अहो सुदिनमेतद्धि नगरं च सुभाग्यवत् ।
यस्मिन् सर्वे भारतीयाः एकत्वं ददृशुर्दृढम् ॥ ४३८ ॥

इयं सभा भारतानां इतिहासेसमुज्ज्वला ।
भविष्यिति भविष्यन्त्याः माता भारतसंसदः ॥ ४३९ ॥

"अनर्हाश्चाऽप्यशक्ताश्च भारतीयाः स्वशासने" ।
इति यत् कथयन्त्यांग्लाः तत्तु मिथ्यापयिष्यति" ॥ ४४० ॥

या त्रिंशत् कोटि सङ्ख्यानां जनानां भारतौकसाम् ।
अङ्गादङ्गाच्च संभूता हृदयेभ्योऽधिनिस्सृता ॥ ४४१ ॥

पृथक् पृथक् प्रदेशेषु स्फुटितां राष्ट्रभावनाम् ।
एकत्राऽऽयोज्य राष्ट्रस्य चिरकाङ्क्षामपूरयत् ॥ ४४२ ॥

आरम्भलघ्वी क्रमशः वर्धिष्णुः सा महासभा ।
देशमोक्षतृषार्तानां गङ्गेवानन्ददायिनि ॥ ४४३ ॥

तस्याः सभायाः प्रारम्भं लक्ष्यं सन्देशमप्यथ ।
सभ्याः निवेदयामासुः स्वस्वप्रान्तं समागताः ॥ ४४४ ॥

जाति धर्म प्रदेशादि भेदं विस्मृत्य भारताः ।
सभायां मिलिताः सर्वे हृदयैरेकतां गताः ॥ ४४५ ॥

हिन्दू मतानुगाश्चैव पारसीकमतानुगाः ।
मुसलमानाः क्रैस्तवाश्च सिक्खधर्मानुयायिनः ॥ ४४६ ॥

ग्रामीणा नागराश्चैव क्षेत्रीयनृपपालिताः ।
आंग्लैः प्रशासिताश्चापि सभायां संगता जनाः ॥ ४४७ ॥

**इति प्रथममधिवेशनम्**

**आंग्लानां प्रतिक्रिया—**

सम्मेलनस्य वृत्तान्तं राजप्रतिनिधिः स्वयम् ।
जानाति स्म, तथैवैनं मनसा प्रशशंस च ॥ ४४८ ॥

यतोऽसौ ह्यूम् महाभागः राजप्रतिनिधिं स्वयम् ।
मिलित्वा, तदनुज्ञां च लब्ध्वा, उपक्रान्तवान् सभाम् ॥ ४४६ ॥

अथाऽपि तद् गोपनीयं इति तद्वाक्य माचरन् ।
रहस्योद्घाटनं नैव चक्रेऽसौ ह्यूम् महाशयः ॥ ४५० ॥

राजप्रतिनिधिश्चैतद् वृत्तं नाऽऽलक्षयन्निव ।
द्रुतं निवेदनं नैव चक्रे भारतमंत्रिणे ॥ ४५१ ॥

राजप्रतिनिधेराज्ञाप्रजासु श्राविता यथा ।
तथा न श्राविता तस्मै प्रजानां तत्प्रतिक्रिया ॥ ४५२ ॥

तदेव कर्तुंमुद्युङ्क्ते काङ्ग्रसीयमहासभा ।
प्रस्तावाः शासकेष्वेव विश्वासप्रार्थनापराः ॥ ४५३ ॥

तत्राऽपि नीतौ निर्वाहेऽप्यल्पिष्ठं तु विशोधनम् ।
कांक्षन्ते स्म; न च क्वाऽपि स्वातंत्र्यं कांक्षितं तदा ॥ ४५४ ॥

आङ्ग्लानां निन्दनं वाऽपि खण्डनम् शासनस्य वा ।
कुत्राऽपि न कृतं किन्तु कृतं प्रायः प्रशंसनम् ॥ ४५५ ॥

तथाऽपि पत्रिका द्वारा भारतीयजनैकताम् ।
श्रुत्वांङ्ग्ल देशे केचित्तु मिथ्याऽऽशंकामकुर्वत ॥ ४५६ ॥

भारतीयाः प्रवर्तन्ते स्वातन्त्र्यं भिक्षयार्जितुम् ।
सम्मेलने भाषणेन पत्रिकालेखनेन च ॥ ४५७ ॥

इति मत्वाऽन्यथाज्ञान विजृम्भण विमोहिताः ।
क्रोधप्रधूमितां वाचं व्याजह्रुः भयशंकया ॥ ४५८ ॥

तेषां मनोगतिं गर्वभयासूयादिसङ्कुलाम् ।
लन्दन् 'टैम्स्' नामके पत्रे व्यलिखत् कश्चिदाङ्गलः ॥ ४५६ ॥

"भारतानां इयं भूमिः बलात्कारात् वशीकृता ।
शासकैः शासनीया सा बलात्कारेण नान्यथा ॥ ४६० ॥

त्यक्तव्या यदि; कस्यापि न वाणीनां बलात् क्वचित् ।
न लेखनी बलाद्वाऽपि बन्दूकानां बलं बिना ॥ ४६१ ॥

परन्तु नाविदन्नेतत्, यत्त्यक्ष्यन्ति बलं विना।
कस्याऽपि गान्धेः लेखन्या वाण्या चैव पराजिताः ॥ ४६२ ॥

यस्तु षोडशवर्षीयः तदा तत्र व्यवर्धत।
स्वीकरिष्यति यः पश्चादहिंसामेव साधनम् ॥ ४६३ ॥

**कांग्रस्सभायाः प्रारम्भिकनीतिः आंग्लानां निर्वाहरीतिश्च**

तस्याः सभायाः नीतिस्तु पुराऽभूत् विनयान्विता।
प्रार्थनाऽनुनयश्चैव प्रदर्शनमसम्मतेः ॥ ४६४ ॥

एतैरुपायैः देशस्य समस्याः सुसमाहिताः।
भवेयुरिति नेतृणां विश्वासः सुदृढोऽभवत् ॥ ४६५ ॥

अतश्च सर्वकारस्य नीतौ देशविरोधिनः।
अंशान् प्रदर्श्य तेषां तु याचते स्म सुधारणम् ॥ ४६७ ॥

तदा हि, सर्वकारेऽत्र सेवाऽपि द्विविधा स्थिता।
एकातु सैनिकी सेवा, विशां सेवाऽपरा मता ॥ ४६७ ॥

विशां सेवा "सिविल् सर्विस्" इत्यांग्लैः कथिताऽभवत्।
पुरग्रामादि निर्वाहं कर्तुं व्यवसिता च सा ॥ ४६८ ॥

तत्राऽप्युच्चपदेष्वासन् गौरा एव नियोजिताः।
तेषां शिक्षा परीक्षा चाऽप्याङ्ग्लदेशे न भारते ॥ ४६९ ॥

भारते क्षेत्रसस्यादि पाकानां दर्शनं विना।
तच्चित्रं कागदेष्वेव दृष्ट्वा निपुणतां गताः ॥ ४७० ॥

उपविंशति वर्षीयाः युवानोऽपक्वबुद्धयः।
योजनानां सहस्राणि व्यतिलङ्घ्य सुदूरतः ॥ ४७१ ॥

भारतं देशमागत्य त्रिंशत् कोटि जनाकुलम्।
भाग्यनिर्णायक स्थाने स्थित्वाऽनुभववर्जिताः ॥ ४७२ ॥

राजनीतौ दण्डनीतौ करनीतौ विशेषतः।
दाय भागादिनीतौ च स्वीयं निर्णयमादिशन् ॥ ४७३ ॥

**न्याय निर्णयः—**

भारतीया विशेषज्ञाः रूढ्या ये धर्ममाचरन् ।
परस्परमभाषन्त विस्मयाविष्टचेतसः ॥ ४७४ ॥

नाचारेण विचारेण भाषया भूषयाऽथवा ।
नाहारेण विहारेण न धर्मेण न चान्यतः ॥ ४७५ ॥

अस्माकं समतां एति योऽधिकारिपदे स्थितः ।
नाऽस्मद् भाषां विजानाति न शृणोति निवेदितम् ॥ ४७६ ॥

गौरस्ताम्रान्, युवा वृद्धान्, विदेशी देशवासिनः ।
गोघ्नः गोपूजकानस्मान् आंग्लभाष्यार्यभाषिणः ॥ ४७७ ॥

कञ्चुकाच्छन्नपीनाङ्गः वातशोषितदेहिजः ।
स्वैरं स्वभाषालिखितान् नियमान् श्रावयन्निह ॥ ४७८ ॥

अस्मदश्रुतपूर्वान् सः निर्णयान् विदधात्यहो ।
इत्येवं विस्मयाविष्टाः वृद्धा भारतवासिनः ॥ ४७९ ॥

स्वभाग्यानि विनिन्दन्तः स्वपक्षं विनिवेदितुम् ।
आङ्ग्ल भाषाज्ञानवन्तं अपरं शरणं गताः ॥ ४८० ॥

असौ तु भारतीयोऽपि कुठारस्थो त्सरुर्यथा ।
वाक्कीलपदमापन्नः स्वकीयानां विशोषणे ॥ ४८१ ॥

आङ्ग्लानामेव साहाय्यमाचरत् स्वार्थसिद्धये ।
एषां हस्तङ्गता एते पामरा न्यायसिद्धये ॥ ४८२ ॥

एभ्यो बहुधनं दत्वा दारिद्र्यं प्रतिलेभिरे ।
आङ्ग्लैः प्रवर्तिता चेयं न्यायनिर्णयपद्धतिः ॥ ४८३ ॥

प्रशंसिताऽत्र बहुभिः 'रानडे' प्रमुखैरपि ।
ग्रन्थाधिरूढा नियमा निष्पक्षा यद्यपि स्थिताः ॥ ४८४ ॥

तथाऽपि गौरविषये पक्षपातेन निर्णयात् ।
आङ्ग्लशिक्षाविरहिणां परापेक्षत्वदुर्गतेः ॥ ४८५ ॥

बहुद्रव्य व्ययायासात् बहुकालात्ययादपि ।
न्याय निर्णयसाफल्यं नास्तिपर्यायितां गतम् ॥ ४८६ ॥

**भूमिकर-नीतिः—**

"ईशावास्यमिदं सर्वं" इत्यादि श्रुतिवाक्यतः ।
यो यत्र जायते भूमौ प्राणी तां भोक्तुमर्हति ॥ ४८७ ॥

जङ्गमानां स्थावराणां भोक्तृ भोग्यतया स्थितिः ।
विधात्रा विहिता या तु सा रीतिर्दुरतिक्रमा ॥ ४८८ ॥

"भूमि र्माता द्यौः पिता" इति वाक्यान्यु द्घोषयन्ति हि ।
भूमेः खण्डस्य कस्यापि नरो न पतिरित्यपि ॥ ४८९ ॥

नृपाभिषेकसमये मन्त्रो यः पठ्यते बुधैः ।
एष वो भरता राजेत्याद्यः तत्राऽपि भूभृताम् ॥ ४९० ॥

प्रजानामेव भरणं 'वः' शब्देन विधित्सिनम् ।
अतः 'तव' 'ममे' त्येष दायभागो न वस्तुनः ॥ ४९१ ॥

परन्तु धर्मविषयः धर्मो भरणमेव हि ।
अतः स्वस्वामि भावोऽयं सम्बन्धः मानुषैः कृतः ॥ ४९२ ॥

स्वाभाविकं पतित्वं तु नरे नास्तीति सूचयन् ।
पत्युश्च नृपते श्चापि भेदं वदति पाणिनिः ॥ ४९३ ॥

अत एव 'पतौ' शब्दः पाराशर्य स्मृतौ श्रुतः ।
पतित्वं गौणमाख्यातीत्याहु र्व्याख्यानकोविदाः ॥ ४९४ ॥

जङ्गम स्थावराणां च तत्तत्पालन कारिणां ।
भोक्तृ भोग्यत्व सम्बन्धः स्व स्वामित्वे विवर्तितः ॥ ४९५ ॥

भारते चाऽपि भूस्वाम्यं भोग्य भोक्तृतयास्थितम् ।
क्रय विक्रययोग्यत्वमापन्नं न कदाचन ॥ ४९६ ॥

काले बहुतिथे याते राज्ञां संघर्षकारणात् ।
क्षोभेन पीडितं देशं त्यक्त्वाऽन्यत्र पलायितुम् ॥ ४९७ ॥

प्रवृत्ताः स्वस्वभूभागं गृहारामादिकं तथा ।
विक्रेतुमारभन्ते स्म जीवनं व्यतिवर्तितुम् ॥ ४९८ ॥

मुगल्शासनकाले तु करग्रहण कर्मणि।
नियुक्ताः ये जमीन्दाराः तालूक्दाराश्च कालतः॥ ४९९॥

साम्राज्ये शिथिले जाते स्वयं भूस्वामिनोऽभवन्।
अधिकारोऽपि सम्राजः क्रमादेभिर्वशीकृतः॥ ५००॥

आङ्गलानां शासनारम्भे तेषां क्रीडाङ्गणाय च।
प्रार्थनामंदिरेभ्यश्च भूमिं क्रेतुमिहोद्यताः॥ ५०१॥

प्राचीनान् नियमान् भङ्क्त्वा नवीनान् प्रचिकीर्षवः।
सर्वा भूमिः शासकानां इतिनीतिं अघोषयन्॥ ५०२॥

सस्यानां रक्षणं कृत्वा प्राणिनां पालनं तथा।
बलिं बुभुजिरे पूर्वे नृपाः षष्ठांशकांक्षिणः॥ ५०३॥

आङ्गलास्त्ववोचन्, सर्वेयं पृथिव्यस्मद्बलार्जिता।
विक्टोरिया महाराज्ञ्यै दत्ता या शास्ति संप्रति॥ ५०४॥

अतः पट्टकमस्माभिः दत्तं तुभ्यं कृषीवल।
अस्मद् भूमौ अस्मदर्थे चास्मदिच्छानुसारतः॥ ५०५॥

कृषिं कृत्वा त्वया देयं शुल्कं अस्मद्विधानतः।
इदं तु क्षेत्र शुल्कं स्यात् न करो न च वा बलिः॥ ५०६॥

इत्येवं नियमान् स्वैरं विधाय स्वार्थसाधकान्।
क्षेत्रकर्षकसम्बन्धं स्वाभाविकमघातयन्॥ ५०७॥

अस्वाभाविक सम्बन्धं क्रयविक्रययोग्यताम्।
पट्टकानां च भूमेश्च नवमेव व्यधापयन्॥ ५०८॥

नव्यं पट्टमिमं प्राप्य कृषिकः क्षेत्रपालकः।
स्वामित्वेन विहीनः सन् केवलं श्रमिकोऽभवत्॥ ५०९॥

प्रशासने नियुक्तानां सैनिकानां च वेतने।
अफ़गान् युद्धादिषु यदा व्ययवृद्धिरभूत् तदा॥ ५१०॥

क्षेत्रशुल्कस्यापिवृद्धिः कारितांङ्गलप्रशासकैः।
शुल्कदानेऽसमर्थस्तु भूमेः निष्कासितोऽभवत्॥ ५११॥

शुल्कवृद्धौ वदन्तीमं सर्वकारस्य दुर्नयम् ।
अदृष्टमश्रुतं चैवं अव्यवस्थाशताकुलम् ॥ ५१२ ॥

एकस्मिन् सदृशे क्षेत्रे क्वचित् षष्ठिगुणाधिकम् ।
क्वचित् शतगुणं चापि क्वचिच्चत्रिशतीगुणम् ॥ ५१३ ॥

क्वचित् सार्धसहस्रांशाः इति शुल्कं विवर्धितम् ।
सर्वकारे व्ययोऽप्येवं वर्धितोऽभूत् पुनः पुनः ॥ ५१४ ॥

ये तु प्रवर्धितं शुल्कं दातुं नाऽशक्नुवन् जनाः ।
अशक्तास्ते कृषिं कर्तुं अनर्हा इति घोषिताः ॥ ५१५ ॥

यत्र सस्यसमृद्धिश्च सुकरश्चकरग्रहः ।
तत्रत्यं नृपमुद्दास्य चक्रुरांङ्ग्ला स्वशासनम् ॥ ५१६ ॥

यत्र शुष्काः प्रदेशाः स्युः दुष्करो वा करग्रहः ।
तत्रत्यमेव राजन्यं करग्राहे न्ययूयुजन् ॥ ५१७ ॥

अथवा प्रतिभूत्वेन तत्रत्यं बलसंयुतम् ।
नियुज्य, तस्मात् स्वं भागं जगृहुः पणबन्धनात् ॥ ५१८ ॥

प्रतिभूः स तु 'जामीन्दार्' इत्येव कथितः पुरा ।
पश्चादभूत् "जमीन्दारः" भूपतित्वं स्वयं वहन् ॥ ५१९ ॥

पणितं शुल्कमांग्लेभ्यो दत्त्वा कृत्रिमभूपतिः ।
स्वभोगापेक्षितं शुल्कं चकर्ष कृषिकाद् बलात् ॥ ५२० ॥

शुल्कमप्येकरूपं न कालतश्च प्रदेशतः ।
कृषीवलेषु स्पर्धा वा स्वेच्छावा तन्नियामिका ॥ ५२१ ॥

अस्मिन् क्षेत्रे कृषिं कृत्वा शुल्कं दास्यति योऽधिकम् ।
स एवाऽत्र कृषिं कर्तुमर्हत्यस्मिंस्तु हायने ॥ ५२२ ॥

इत्येवं घोषणां कृत्वा स्पर्धोत्पादनपूर्वकम् ।
प्रकाशं श्रमिकत्वस्याप्यभवत् क्रय विक्रयः ॥ ५२३ ॥

अतश्चागतिका भूत्वा कृषिकाः श्रमिकास्तथा ।
क्षेत्राणि स्ववशीकर्तुमस्पर्धन्त परस्परम् ॥ ५२४ ॥

**कर-ग्रहण रीतिः—**

प्रतिजज्ञेऽधिकं कश्चित् ततोऽधिकतरं परः।
अन्योऽधिकतमं चोक्त्वा क्षेत्रं तत्स्ववशेऽकरोत् ॥ ५२५ ॥

शुल्कार्थे रूप्यकाण्येव दातव्यानि कृषीवलैः।
तेषामलाभे तत्प्राप्त्यै पुनः स्पर्धाव्यजायत ॥ ५२६ ॥

विक्रयात् सर्वधान्यानां क्षेत्र शुल्कमपूरितम्।
यदाऽपश्यत् तदा मूर्खः गोवलीवर्द विक्रयात् ॥ ५२७ ॥

तदृणं शोधयामास, पश्चाद् दैनिककर्मसु।
विक्रीणाति शरीरं स्म दिनवेतनलब्धये ॥ ५२८ ॥

एवं भूस्वाम्यं उज्झित्वा भूमी वेतन जीविकः।
क्रमवृद्धेन दारिद्र्य भारेण दमितोऽभवत् ॥ ५२९ ॥

कदाचिद् वेतनाप्राप्तौ स्वपत्न्याः भूषणादिकम्।
निक्षिप्य, ऋणमादाय कुटुम्ब भरमावहत् ॥ ५३० ॥

ऋणापनयनार्थं सः ऋणार्णं कृतवानथ।
कुसीदवृत्तिभिः सम्यक् दृढं कृतकचग्रहः ॥ ५३१ ॥

स्वात्मानं स्वसुतं वाऽपि विक्रीयाऽपि सुदुर्गतः।
न मोचयितुमात्मानं अशकद् ऋणबन्धनात् ॥ ५३२ ॥

एवं परम्पराप्राप्तात् स्वामित्वात् क्षेत्रपालकः।
प्रच्युतः पुत्र पौत्रेभ्यः क्रीतदासत्वमाददे ॥ ५३३ ॥

कर ग्रहण नीति स्सा कचक्रहण मादिशत्।
इत्यत्र बहवो देशे दृष्टान्ताः शक्यदर्शनाः ॥ ५३४ ॥

**करग्रहण-रीतिः-न्याय निर्णय रीतिश्च—**

आंग्लानां समुदाचारः करेण करपीडनम्।
कृषीवलेष्वभूदेषः "करेण" कचपीडनम् ॥ ५३५ ॥

करनिर्णय नीतेश्च तस्य ग्रहणपद्धतेः।
तद्ग्राहकविभागस्याप्येक एव विधायकः ॥ ५३६ ॥

स एव मंडलाधीशः कलेक्टर इतिचोच्यते।
तदधीनविभागस्यापराधानां विचारणे ॥ ५३७ ॥

स एव मंडलाधीशः न्यायमूर्तित्वमावहन्।
एकोऽपि मुखभेदेन निर्वाहं नीतिमप्यधात् ॥ ५३८ ॥

कर निर्वाहकत्वेन स्वाज्ञया दुर्नयं कृतम्।
न्याय निर्णायकत्वेन खण्डनं कथमाचरेत् ॥ ५३९ ॥

ईदृशेष्वांग्लतरूणाः प्रायः स्थानेषु योजिताः।
विशां सेवापरोक्षायां उत्तीर्णा एव नान्यथा ॥ ५४० ॥

एतदाज्ञानुसारेण करग्रहण तत्पराः।
तस्यावराः भारतीया अपितत्र नियोजिताः ॥ ५४१ ॥

लुञ्चां गृहीत्वा प्रथमं पश्चात् शुल्कस्य निर्णयम्।
कुर्वन्ति स्मान्यथा शुल्कं द्विगुणं त्रिगुणं भवेत् ॥ ५४२ ॥

एवं वहुविधान् क्लेशान् अन्वभूवन् कृषीवलाः
तेषां क्लेशकथां श्रोतुं शासकेषु न कोऽप्यभूत् ॥ ५४३ ॥

एषैव नीतिरांग्लानां उच्चकोटिं गता क्रमात्।
करदान विरोधेऽभूत् हेतुः बर्डोलिमंडले ॥ ५४४ ॥

**वनवन्यसुरक्षणनीतिः—**

यज्ञार्थात् कर्णणोऽन्यत्र वृक्षपातनशातनम्।
निषिद्धं सर्वथेत्येतत् सर्वे जानन्ति भारताः ॥ ५४५ ॥

यज्ञार्थेऽपि विना मन्त्रं प्रार्थनं च वनस्पतेः।
न कुर्यात् छेदनं तस्य वैदिकं धर्ममाश्रितः ॥ ५४६ ॥

"ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते।
प्रार्थ्यैवं दन्तकाष्ठं वा पत्रं वाऽपि छिनत्तिसः ॥ ५४७ ॥

"मैनं हिंसीः स्वधिते" इत्याद्या मन्त्रवर्णकाः।
वृक्षस्य छेदने हिंसां पापं चोपदिशन्ति हि ॥ ५४८ ॥

अहिंसा परमो धर्मः वृक्षच्छेदोऽपि हिंसनम्।
इतिधर्मं विजानाति पंडितः पामरोऽपि वा ॥ ५४९ ॥

तथाऽपि गृहनिर्माणे कृष्याद्यौपयिके तथा ।
खलपूशकटादीनां निर्माणे चोपयोगिनाम् ।। ५५० ।।

इन्धनाद्युपयुक्तानां काष्ठानां छेदने कृते ।
नापश्यन्नपराधं ते जीवनाधार सिद्धये ।। ५५१ ।।

भीलाः कोलाश्च वहवः शुष्ककाष्ठादिविक्रयात् ।
जीवनं वर्तयन्तिस्म कुटुम्बभरणं तथा ।। ५५२ ।।

ग्रामस्थितान्यरण्यानि तत्रत्याः पशुपक्षिणः ।
सर्वे ग्रामसमाजस्य सम्पत्तिरिति पप्रथे ।। ५५३ ।।

एवं प्रथायां सत्यामप्यांग्लशासनपद्धतौ ।
वनवन्य सुरक्षार्थं विभागः पृथगुत्थितः ।। ५५४ ।

निबद्धा नियमास्तत्र ग्राम्यवृत्तिविरोधिनः ।
दण्डो यदनुसारेण, तक्ष्णां दारुविभेदने ।। ५५५ ।।

पशूनां घासचरणे भीलानां काष्ठसञ्चये ।
विहितोऽभूत्, विशेषेण वृत्तिरेषां प्रबाधिता ।। ५५६ ।।

दयापरवशा चाऽऽसीद् विभागस्याधिकारिणाम् ।
उदाहरन्ति वचनं एतद्वर्णनतत्परम् ।। ५५७ ।।

"अन्नी बमन्ता मात्रा यद् लिखितं स्वीयपुस्तके ।
अस्मद्ग्रामेषु सर्वेषु वृक्षाः सन्ति पदे पदे ।। ५५८ ।।

गृहाणां खलपूखट्वा शकटानां च निर्मितौ ।
अस्माकमुपयोगार्थं अस्मत्पूर्वैः प्ररोपिताः ।। ५५९ ।।

अद्य, वन्यविभागीयैः निर्दयं स्ववशीकृताः ।
सुरक्षितवनस्याऽपि सीमा नैव सुलक्षिता ।। ५६० ।।

पत्रं, पुष्पं, फलं, काष्ठं, ग्रामीणो यदि वांछति ।
गतागतिस्तेन कार्या द्वारि द्वार्यधिकारिणाम् ।। ५६१ ।।

लुञ्चा देयैव सर्वेभ्यः कार्यं सिद्ध्येन्नचान्यथा ।
न केवलं नरा एव प्रतिषिद्धाः प्रवेशनात् ।। ५६२ ।।

वनेषु, तद्विभागीयैः परन्तु पशवोऽपि च।
त्रिलक्षसंख्याः पशवः मृता ग्रासनिरोधनात्[२] ॥ ५६३ ॥

एकस्मिन्नेव वर्षे तच्चैकस्मिन्नेव मंडले।
महानेषोऽपराधोऽस्तिशासकैर्दुर्नयात् कृतः ॥ ५६४ ॥

एक एव हि पर्याप्तः प्रजासु द्वेषपोषणे।
अन्नी वसन्ता मातैवं व्यलिखत् स्वीयलेखने ॥ ५६५ ॥

देशाचारविचाराणां प्रथानाञ्चाविमर्शनात्।
उपेक्षणाद्वा स्वच्छन्दं नियमानां निबन्धनात् ॥ ५६६ ॥

शासनाच्च कियद्दुःखं प्रजाभिः भुज्यतेऽनिशम्।
इत्येतं मुख्यविषयं नाऽबुध्यन्त प्रशासकाः ॥ ५६७ ॥

यूरपीयसमाजस्य मृगयाक्रीडनांगणम्।
पण्यनिर्माणशालानां मूलद्रव्यसमर्पिका ॥ ५६८ ॥

भोगभूमिस्तथाङ्ग्लानां भृत्यवर्गप्रदायिनी।
भूमि भारतदेशस्येत्यमन्यन्ताङ्ग्लशासकाः ॥ ५६९ ॥

**त्रिवर्गेषु विपर्यासः—**

आङ्ग्लाः धर्मार्थकामेषु भङ्क्त्वा भारतपद्धतिम्।
अन्यादृशीं विपर्यस्तां स्थितिं आनिन्यिरे बलात् ॥ ५७० ॥

धर्मः कर्तव्यरूपोऽभूत् योऽर्थकामनियन्त्रकः।
आङ्ग्लानुशासने निष्ठैवाद्य धर्मः प्रकीर्त्यते ॥ ५७१ ॥

यच्च क्रिस्तूमतस्यात्र प्रचारोऽपि प्रवर्तितः।
जनानां आङ्ग्लदासत्व स्थैर्यायैवेति तद्विदुः ॥ ५७२ ॥

प्रजायै धर्मपत्नीच्छा काले, कामः प्रकीर्तितः।
सर्वेन्द्रियाणां व्यसनस्वातन्त्र्यं काम ईर्यते ॥ ५७३ ॥

यावद्वाञ्छित वस्तूनां आर्जनं धर्मसम्मतम्।
अधिकस्य तु वाञ्छाऽपि पापाचार इतीरितम् ॥ ५७४ ॥

येन केन प्रकारेण यावच्छक्त्यर्थसञ्चयः।
कर्तव्य इत्यर्थ नीतिः कारिताऽऽङ्ग्ल प्रशासकैः ॥ ४७५ ॥

शतांशेनैव लाभेन धार्मिका वैश्यवृत्तयः।
अतुष्यन्, वस्तुदेशादि नियमान् अन्वपालयन्॥ ५७६॥

वानराणां नराणां चाप्यर्थार्थे क्रयविक्रयम्।
यावच्छक्यं लाभलोभं अकुर्वन्नाङ्ग्ल जातयः॥ ५७७॥

स्व व्यापार समृद्ध्यर्थं परव्यापारभञ्जनम्।
नाकुर्वन् भारते वैश्याः स्वं स्वं धर्ममनुव्रताः॥ ५७८॥

आङ्ग्ला स्तु स्वीयवाणिज्यवृद्धयेऽन्य विमर्दनम्।
अकुर्वन्, स्वानु कूलाञ्च शुल्कनीतिं व्यधापयन॥ ५७९॥

भारतोत्पन्नवस्तूनां अधिकं शुल्कमाददुः।
यथांऽऽग्लदेशोत्पन्नानां व्यापारो वृद्धिमाप्नुयात्॥ ५८०॥

**सामान्य शिक्षा—सैनिकशिक्षा च**

अरबदेशविनिष्पन्नसुगन्धिद्रव्यविक्रयात्।
मृष्टान्नाद्यादिवस्तूनि क्रेतुकामाः वणिग्वराः॥ ५८१॥

वामहस्ते सुगन्धञ्च वन्दूकं दक्षिणे करे।
निधाय, भारतं देशं प्राविशन् आङ्ग्लदेशिनः॥ ५८२॥

कूट व्यापारतन्त्रेण व्यापारे धर्मतत्परान्।
कूटयुद्धे विजिग्युश्च धर्मयुद्धैकतत्परान्॥ ५८३॥

अन्यादृशं युद्धतन्त्रं शस्त्रं चादृष्टपूर्वकम्।
निश्छलेषु निरस्त्रेषु प्रयुञ्जाना न जिह्रियुः॥ ५८४॥

पश्चात् शासन कालेऽपि युद्धतन्त्रेषु शिक्षणम्।
न ददुः भारतीयेभ्यः दूरात् तान् पर्यवर्जयन्॥ ५८५॥

सामान्यशिक्षणमपि दातुं नेच्छन्ति ये जनाः।
सेना तन्त्रं कथं गुप्तं शिक्षयेयुः स्वसेवकान्॥ ५८६॥

पाश्चात्यशिक्षणविधिं याचते स्म यदा सुधीः।
राजा राम् मोहनो रायः तदप्याङ्ग्लैः निराकृतम्॥ ५८७॥

कदाचिद् 'ह्यूम्' महाभागः मंडलाधीशतां वहन्।
शिक्षाप्रचारे सन्नद्धः प्रतिषिद्धोऽधिकारिभिः॥ ५८८॥

"भारतीया जनाः सर्वे पण्डिताः पामरा अपि ।
निर्विकल्पे सविकल्पे वा समाधौ स्वस्वकल्पिते ॥ ५८९ ॥

निर्गुणे सगुणे वाऽपि लोकज्ञानविदूरगे ।
सुषुप्तेः परं आश्चर्यं सुखं कौशेयकीटवत् ॥ ५९० ॥

यावत् पश्यन्ति निभृतं कुशलं तावदेव नः ।
कोशेषु सुखसुप्तांस्तान् न कोऽप्याङ्ग्लः प्रबोधयेत् ॥ ५९१ ॥

शिक्षाप्रचारकार्येषु राज्यकोशाद् धनव्ययः ।
कदाऽपि नानुमन्येते त्यादिष्टमधिकारिभिः ॥ ५९२ ॥

आदेशं 'ह्यूम्' महाभागः प्राप्यखिन्नमनास्तदा ।
उत्तरं प्रेषयामास यत्रैवं व्यलिखत् कृती ॥ ५९३ ॥

आंग्लानां शासने शान्तिः समृद्धिर्योपजायते ।
निष्पक्षपाता नीतिर्या ये चान्ये लाभदायकाः ॥ ५९४ ॥

व्यवहाराः प्रवर्तन्ते तानपि ज्ञातु मक्षमाः ।
उपेक्षन्ते भारतीयाः न जानन्ति गुणानपि ॥ ५९५ ॥

अस्मद् गुणानां ज्ञानार्थे शिक्षणीया इमे जनाः ।
एवं विलिख्य शिक्षायाः समर्थनमकारयत् ॥ ५९६ ॥

तथा मेकाले प्रभुणा सेवकान् स्रष्टुमिच्छता ।
नव्यशिक्षा प्रणालीयं स्वार्थदृष्ट्या प्रचालिता ॥ ५९७ ॥

एवं सामान्यशिक्षाऽपि प्रतिषिद्धा यदांऽऽङ्गलैः ।
वक्तव्यं किमु सेनायाः मन्त्रतन्त्रादि शिक्षणे ॥ ५९८ ॥

अतश्चानेकसाहस्रानाङ्ग्लानामेव सैनिकान् ।
भारते स्थापयामासुः चक्रुश्चाति धनव्ययम् ॥ ५९९ ॥

रूप्याणां द्विशतीं प्राप्नोत्याङ्ग्लद्वीपे तु सैनिकः ।
स एव भारते सप्तशतान्याप्नोत्ययत्नतः ॥ ६०० ॥

आफगन-युद्धं तिवत्-युद्धं प्राचलद् भारताद् बहिः ।
तत्राप्यपव्ययं चक्रुः भारतस्यैव कोशतः ॥ ६०१ ॥

आङ्ग्लानां स्वार्थरक्षार्थं आंग्लसेनाऽत्र रक्षिता ।
भारतीयनिधेरेव तद्व्ययं चक्रुराङ्गला: ।। ६०२ ।।

वर्षे वर्षे च सेनायां व्ययो वृद्धि मवाप्नुवन् ।
उपविंशति वर्षेषु द्विगुणः समजायत ।। ६०३ ।।

दश सप्त च कोटीनां योऽभवद् वार्षिको व्ययः ।
उपविंशति वर्षान्ते द्वात्रिंशत् कोटिकोऽभवत् ।। ६०४ ।।

त्रिंशत् कोटिक संख्यानां भारतानां दमोद्यमे ।
द्वात्रिंशत् कोटि रूप्याणां कर्तव्योऽभूद् महान् व्ययः ।। ६०५ ।।

सोऽपि तस्मिन्ननावृष्ट्याऽऽहते वर्षे, यदा जनाः ।
नियुतानां दशैकं च बुभुक्षा पीडिता मृताः ।। ६०६ ।।

ततोऽपि स्वर्णमुद्राणां त्रिलक्षाधिकसंख्यया ।
व्यये वृद्धिरभूत् सोऽपि भारतस्यैव कोशतः ।। ६०७ ।।

**सैनिकसमस्या-आंग्लानां नीतिः—**

एतद्विरोधं कुर्वन्ती काङ्ग्रसीयमहासभा ।
आंग्लदेशस्य कोशाच्च व्यये भागमयाचत ।। ६०८ ।।

एवं न्याये च निर्वाहे वाणिज्ये शिक्षणे तथा ।
सेनानां करनीतौ च दण्डनीतौ च सर्वथा ।। ६०९ ।।

स्वीयानुकूला मुत्पाद्य स्थितिमाङ्ग्लप्रशासकाः ।
विनैवोत्तरदायित्वं विना पर्यनुयोज्यताम् ।। ६१० ।।

विनाऽभियोगार्हत्वं च स्वशासनमचालयन् ।
अत एव प्रवादोऽयं लोकेषु प्रथितः पुरा ।। ६११ ।।

आङ्ग्लानामेव भूत्यर्थं आङ्ग्लैरेव प्रतिष्ठितम् ।
"आङ्ग्लानामेव भूत्यर्थं आङ्ग्लैरेव प्रतिष्ठितम् ।। ६१२ ।।

उक्तं सर्वमनौचित्यं अपनेतुं कृतोद्यमा ।
कांग्रस् सभा स्वप्रयत्नं सन्तनोति स्म सन्ततम् ।। ६१३ ।।

विप्लवं भूतपूर्वं तं स्मृत्वाऽऽङ्ग्लाः भयशङ्कया ।
सेनायां भारतीयानां प्रवेशं नानुमेनिरे ।। ६१४ ।।

तेषां शङ्कां भयञ्चापि दूरीकर्तुं समुद्यताः ।
नेतारो वह्वः काङ्ग्रस् सभासमधिवेशने ॥ ६१५ ॥

विश्वासं भारतीयानां दृढमाङ्ग्लप्रशासने ।
स्पष्टं प्रकाशयामासुः भाषणैः स्तुतितत्परैः ॥ ६१६ ॥

विक्टोरियाघोषणाञ्च स्मारयन्तः पुनः पुनः ।
निराकृता तया यत्र जात्याद्यैः भेद भावना ॥ ६१७ ॥

अत्रोत्तरं ददुः केचित् घोषणं यत् कृतं पुरा ।
आश्वासनपरं तत् स्यात् न वै समयवन्धकम् ॥ ६१८ ॥

असैनिकेष्वपि स्थानेष्वाङ्ग्लानामेव मुख्यतः ।
कार्यानियुक्तिरिति चेत् सैनिकेषु तु का कथा ? ॥ ६१९ ॥

इत्येवमुत्तरं श्रुत्वाप्यविश्रान्ता महासभा ।
सैनिकेषु स्वयं सेवादलानां स्थापनं पृथक् ॥ ६२० ॥

सेनाशिक्षणसंस्थानां भारते स्थापनं तथा ।
सेनासु भारतीयानां प्रवेशं च प्रशिक्षणम् ॥ ६२१ ॥

अवधारयितुं भूयो भूयश्च प्रार्थनां व्यधात् ।
अत्रोदाहरणार्थाय डफ्रिन् शासनकालतः ॥ ६२२ ॥

प्रवृत्तिर्भारतीयानां अवधानमिहार्हति ।
आघातो यत्र नेतॄणां द्वितीयः समुपस्थितः ॥ ६२३ ॥

**प्रथमः आघातः—**

रिप्पन् शासनकाले यत् गौरागौरप्रभेदकान् ।
नियमानुपसंहर्तुं कृतं 'इल्बर्ट' विधेयकम् ॥ ६२४ ॥

आंग्लाधिकारिवर्गेण गौरै श्च विफलं कृतम् ।
आघातोऽनुपमस्तेन कृतो भारतवासिषु ॥ ६२५ ॥

पश्चादारब्धमस्यैव काले क्षेत्रीयशासनम् ।
केन्द्रात् मण्डलपर्यन्तं सभासमितियोजनम् ॥ ६२६ ॥

तेन सन्तुष्टहृदयाः तमाघातं विसस्मरुः ।
तस्मिन् दर्शित विश्वासाः प्रशशंसुश्चतं प्रभुम् ॥ ६२७ ॥

**द्वितीयः ग्राघातः—**

तस्यसेवानिवृत्तस्य गच्छतः स्वगृहं तदा।
सम्मानं च यशोगानं चक्रुः भारतवासिनः॥ ६२८॥

अदृष्टमश्रुतं तस्य सत्कारं भारतैः कृतम्।
आंग्लाधिकारिणो दृष्ट्वा जज्वलुर्ह्यसूयया॥ ६२९॥

तदाऽऽगतो महाराज्य पालो "डफ्रिन्" महोदयः।
'रिप्पन्' प्रभोरेव नीतिमनुसर्तुमचेष्टत॥ ६३०॥

तदा ऋषीयदेशस्य सैनिका बहुसंख्यकाः।
आफ्गानिस्तानदेशस्यरुरुधुर्दिशमुत्तराम्॥ ६३१॥

'डफ्रिन्' भारतदेशस्य सीमारक्षणतत्परः।
आङ्ग्ल सैनिकयूथानि सीमाप्रान्ते न्यवेशयत्॥ ६३२॥

भारतस्यार्थिकं कष्टं महान्तं सैनिकव्ययम्।
आलोच्य भारते केचित् नेतारस्सुवि चारकाः॥ ३६३॥

राजानश्च जमीन्दाराः ऋष्यदेशविरोधिनः।
आङ्ग्लानां गौरवं त्रातुं सीमाप्रान्तञ्च रक्षितुम्॥ ६३४॥

अवरोद्धुं च ऋष्याणां सैनिकान् बहुदूरतः।
सर्वकारस्य साहाय्यं कर्तुं सर्वे समुद्यताः॥ ६३५॥

स्वस्वसेनां प्रदातुं च युद्धसेवां चिकीर्षवः।
स्वयं सेवकयूथानि संस्थापयितुमुत्सुकाः॥ ६३६॥

शासकान् प्रार्थयन्ते स्म, प्रार्थना सा निराकृता।
आङ्ग्लाश्च यूरपीयाश्च यूरेषीयाश्च जातयः॥ ६३७॥

स्वयं सेवादलेऽर्हन्ति प्रवेशं, नान्यजातयः।
यद्यत्र भारतीयानां कर्तव्यं चेत् प्रवेशनम्॥ ६३८॥

तर्हि, क्रिस्तवधर्मावलम्बिनामेव केवलम्।
एवं नियममाश्रित्य भारतीया बहिष्कृताः॥ ६३९॥

चत्वारो ये स्वयं सेवा दलेऽनुमतिमापिरे।
उच्चाधिकारिभिः पश्चात् तेऽपि निष्कासिताबहिः॥ ६४०॥

अनेकलक्षसंख्याका भारतीयाः प्रसैनिकाः।
अल्पव्ययेन लप्स्यन्ते सीमारक्षणतत्पराः ॥ ६४१ ॥

तथाऽपि तेष्वविश्वासात् आंग्लानामेव सैनिकाः।
आंग्लगौरवरक्षार्थं सीमाप्रान्ते निवेशिताः ॥ ६४२ ॥

एतेषामांग्लसैन्यानां डम्भाडम्बर जीवनं।
रक्षितुं कोटिसंख्यानां रूप्यकाणामभूद्व्ययः ॥ ६४३ ॥

एवंचानेक कोटीनां व्ययं भारतकोशतः।
कृत्वाऽत्रत्यजनक्रोधमक्रीणन्नाङ्गलशासकाः ॥ ६४४ ॥

भारते राङ्गलसेनार्थं कृत्वाबहुधनव्ययम्।
घृणा, लघुत्वं, दैन्यं च त्रितयं क्रीतमञ्जसा ॥ ६४५ ॥

विश्वस्तेष्वप्यविश्वासं, घृणां सेवापरेष्वपि।
आंग्लानां भारतीयेषु दृष्ट्वाऽखिद्यन्त भारताः ॥ ६४६ ॥

इमं द्वितीयमाघातं दृष्ट्वाकाङ्ग्रस् महासभा।
प्रस्तावं कञ्चिदानिन्ये द्वितीये स्वाधिवेशने ॥ ६४७ ॥

**राष्ट्रीयपत्रिका द्वारा स्थितेरवगमः—**

राष्ट्रीयान्दोलनारम्भात् पूर्वं याऽत्र परिस्थितिः।
तदा देशीयपत्राणां लेखनेभ्योऽवगम्यते ॥ ६४८ ॥

तदाऽर्थंनीतिविषये प्रजानां या प्रतिक्रिया।
'खानदेशवैभवा''ख्यायां प्रत्रिकायां प्रकाशिता ॥ ६४९ ॥

''प्रजानामिच्छया यत्र शासनं संप्रवर्त्यते।
तत्रैव कुशलं तासां योगक्षेमौ व्यवस्थितौ ॥ ६५० ॥

यत्र प्रजाः शासकाश्च शास्याश्च नियमान् स्वयम्।
विदधनाः प्रकाशन्ते तासां तत्र सुखं भवेत् ॥ ६५१ ॥

येषां परिश्रमाद् वित्तमार्जित्तं च सुरक्षितम्।
तेषामेवाऽधिकारोऽस्य वित्तस्य व्यय कर्मणि ॥ ६५२ ॥

लोके सर्वत्र देशेषु रीतिरेषैव दृश्यते।
भारतेऽस्मानपृष्ट्वैव वित्तमन्यत्र नीयते ॥ ६५३ ॥

नित्यं निवेदनपरा दयनीयतया वयम्।
आङ्ग्लास्तु निग्रहपरा पदाघातान् प्रकुर्वते ॥ ६५४ ॥

यावद् यावद् वयं नम्राः तावद् ते दमयन्तिनः।
एतद् स्पष्टतया ज्ञातं यद् वयं नैव शक्नुमः ॥ ६५५ ॥

न्यायं प्राप्तुं शासकेभ्यः यावदल्पबलावयम्।
शक्तिस्तु परया शक्त्या जेप्यते नैवचान्यथा ॥ ६५६ ॥

विना तां विफलोऽस्माकं प्रयासः सर्वथा भवेत्।"
एवमुद्बोधयन्ती सा पत्रिका व्यवृणोत् स्थितिम् ॥ ६५७ ॥

**स्वतंत्रा पत्रिकायां प्रकाशितो लेखः—**

ततो वर्षत्रयात् पश्चाद् अन्याकाचन पत्रिका।
"स्वतन्त्राख्यालिलेखैवं तत्कालीनां परिस्थितिम् ॥ ६५८ ॥

"यदाऽनवधिकाऽस्माकं सम्पत्तिः कर्षिता बलात्।
नीता विदेशं निन्दार्हैरुपायैः परदेशिभिः ॥ ६५९ ॥

यदा विरोधं कुर्वन्ति नराः 'सालिस्वरी' समाः।
जनानां भारतीयानां 'सिविल्' सेवा प्रवेशने ॥ ६६० ॥

सर् जान् स्ट्राची' समाः केचित् आयशुल्कादिभारतः।
दारिद्र्यसागरे मग्नान् मज्जयन्ति जनान् पुनः ॥ ६६१ ॥

स्वार्थवादी यदा 'लिट्टन्' शुल्कं लवणभोजिनाम्।
विदधानः वर्धयानः जननिग्रह तत्परः ॥ ६६२ ॥

यदा वयं स्वाधिकारान् समये प्राप्तुमक्षमाः।
वैदेशिकैः योक्तबद्धाः अशरण्याः वृषाः यथा ॥ ६६३ ॥

तदाऽऽप्तव्या न किं स्वाधिकारसिद्धयै स्वतन्त्रता ?।
पारतन्त्र्योद्भवं दुःखं कियत् कालेन सह्यताम् ॥ ६६४ ॥

एतत्तु सीमाऽतिक्रान्तं इतः सोढुं न शक्नुमः।
स्वातन्त्र्यमेवोद्यानं तत् यत्रारोमो जयस्तथा ॥ ६६५ ॥

**महाराष्ट्र मित्र' पत्रिकायां शिक्षा विषयको लेखः —**

यत्"महाराष्ट्रमित्रा"ख्यपत्रिकायां प्रकाशितम् ।
शिक्षा प्रचार विषये संगृहीतमिदं बुधैः ॥ ६६६ ॥

"शिक्षाप्रचारो देशेऽस्मिन् विस्तृतोऽभून्न संशयः ।
परन्तु कीदृशी शिक्षा कुत्रेयमुपयुज्यते ? ॥ ६६७ ॥

इयमुत्पादयेन्नूनं सेवकान् लेखकानपि ।
तथा च योग्यता चैषां केवलं दासकर्मणे ॥ ६६८ ॥

फलतः बहवो देशे दासीभवितुमिच्छुकाः ।
दास्यं स्वीकर्तुमेतेषां स्वामी नैवोपलभ्यते ॥ ६६९ ॥

बहवो मुखपाठेनैवेतिहासं वदन्ति हि ।
तादृशो नास्ति यो नव्यं इतिहासं प्रकारयेत् ॥ ६७० ॥

अत्यन्त पक्षपातेन कार्यं कुर्वन् प्रशासकः ।
ब्रित्तन् समानः कोऽप्यत्र न दृष्टो नैव च श्रुतः ॥ ६७१ ॥

ब्रित्तन् प्रशासकैरस्मिन् देशे नाशो यथा कृतः ।
तथा केनापि कुत्रापि कृतो नैव भवेदिति ॥ ६७२ ॥

# कतिपयानां वार्तिककारोक्तशब्दानां भाषावैज्ञानिकमध्ययनम्

—डॉ० सुद्युम्नाचार्यः

संस्कृत व्याकरणे नितरां सुपूजितः, त्रिमुनिव्याकरणस्येत्येवं प्रसिद्धेषु मुनिष्वन्यतमः वार्तिककारः कात्यायनः वैयाकरणनिकाये चकास्ति। अयं पारदृश्वा पाणिनेः ख्याततमं व्याकरणं व्याचष्ट, शब्दानां सिद्धये अनुक्तान् नियमान् व्यवरिष्ट, अथ चोक्तानपि नियमान् शब्दसिद्धिपूर्वकमचिचिन्तत्। अत एव तस्य वचासु 'उक्तानुक्त दुरुक्त चिन्ताकरत्वं वार्तिकत्वम्। इति लक्षणमन्वर्थं घटते। इदं हि तस्यावितथं प्रामाण्यं यत् पतंजलिमुनि प्रभृतयस्सर्वेऽपि लब्धवर्णा वैयाकरणास्तमुपशिश्रिये। शब्दानां सिद्धये तस्य वचांसि समंप्रामाण्यं भजन्ते। पतंजलिमुनिः पाणिनिसूत्रवत् वार्तिकेष्वपि भाष्यं चक्रिरे। इदमस्त्यसन्दिग्धं यत् वार्तिकं प्राप्य पाणिनि सूत्राणि पूर्णतां प्रापुः।

इदमस्ति प्रतिष्ठिततमं तथ्यं यत् पाणिनेर्व्याकरणं वैज्ञानिकमाधारमवलम्बते। प्रकृति प्रत्ययविभागकल्पनया शब्दानां सिद्धिप्रकारः निरुपमः। एष प्रकारः शब्दानामर्थं सुप्रतरामवबोधयति। अपि च शब्दार्थविकासप्रक्रियावबोधनेऽपि साहाय्यं विदधाति। व्याकरणोक्तः प्रकार एवाधुनिकभाषाविज्ञाने Morphology इति पदेनाविष्कृताया पद्धतेरुपजीव्यः। प्रकृतिप्रत्ययविभाजने ये केचन नियमास्तत्राविष्कृतास्ते सर्वेऽपि तत्राङ्गीक्रियन्ते।

शब्देषु प्रकृतिप्रत्ययनिर्धारणप्रकारः सिद्धं त्वन्वयव्यतिरेकाभ्याम् इति वार्तिकेण (१।२।४५ सूत्रे) महता कण्ठेन वार्तिककारः प्रत्यपीपदत्।

अत्र महाभाष्यकारः—'वृक्ष इत्युक्ते कश्चिच्छब्दः श्रूयते···अर्थोऽपि कश्चिद् गम्यते···। वृक्षावित्युक्ते कश्चिच्छब्दो हीयते, कश्चिदुपजायते, कश्चिदन्वयी···अर्थोऽपि कश्चिद्धीयते, कश्चिदुपजायते, कश्चिदन्वयी। तेन मन्यामहे—यः शब्दो हीयते तस्यासावर्थो यो हीयते, यः शब्द उपजायते तस्यासावर्थो योऽर्थ उपजायते। यः शब्दोऽन्वयी तस्यासावर्थो योऽर्थोऽन्वयी'।

एवं शब्दस्यार्थस्य च तुलना द्वारकं प्रकृति प्रत्ययनिर्धारणम्। प्रकृति प्रत्ययौ लोकेऽप्रयुक्तावप्येतेनानुमानविधिना तयोरर्थवत्वं संगिरन्ते प्रथमे वैयाकरणाः। परं केवलो धातुः केवलश्च प्रत्ययः लोके अर्थावबोधनेऽक्षम इत्यतो केवलस्य प्रयोगो न्यषिध्यत वैयाकरणैः। एतेन विस्पष्टं प्रतिवेद्यते यत् धातुप्रत्ययो केवलयोरर्थवत्त्वमनुमानगम्यमपि न तावन्योन्यविरहितौ लोके अर्थावबोधनक्षमौ। वृक्षमित्यत्राम् प्रत्ययोऽनुमानेन सार्थकोऽपि वृक्ष शब्दं विना लोके निरर्थकः। एवं पठतीत्यत्र 'पठ्+अति' उभावपि परस्परं सायुज्यवन्तौ सार्थकावपि, अनुमानेनार्थवन्तावपि लोके केवलौ निरर्थकौ। यत्र द्वावपि लोके सार्थकौ शब्दौ सम्मिलतः न तौ प्रकृति प्रत्ययार्हताम् अपितु समासतां भजतः। एवं 'नीलकमलम्' इत्यत्र द्वावपि समस्तौ पदौ, समासात् पूर्वं 'नीलम् कमलम्' इति द्वयो लोके अर्थवत्त्वात्। पठतीत्यत्र द्वावपि प्रकृतिप्रत्ययौ निर्माणात् पूर्वं 'पठ्+अति' इति द्वयोरपि लोके अर्थवत्त्वाभावादिति विवेकः।

यद्यपि समासस्य प्रकृतिप्रत्यययोश्चायं विषयविभागो न क्वापि प्रोक्तः। परं प्रत्ययानां रूपदर्शनेन, अन्वयव्यतिरेकनियमेन 'न केवला प्रकृतिः प्रयोक्तव्या च केवलः प्रत्यय' इति नियमेन चेदमवसीयते। यदि समासवत् प्रत्यया अपि लोके सार्थका स्युस्तर्हि 'न केवलः प्रत्ययः प्रयोक्तव्यः' इति नियमः सार्थकतां जह्यात्। सार्थकस्य प्रत्ययसंज्ञायामपि तस्य प्रयोगस्य लोके निवारयितुमशक्यत्वात्। अतो लोके सार्थकाः शब्दाः सर्वथा प्रत्यय संज्ञानर्हाः। आधुनिकभाषाविज्ञानेऽपि बद्ध रूपिम (Bound Morpheme) रूपेणानुज्ञातेषु प्रकृतिप्रत्ययेषु न समासगता शब्दाः सम्मिलन्ति, समासगतानां शब्दानां सर्वदा बद्धत्वाभावात्।

वार्तिककारोऽपीममर्थमुररीकरोति, काँश्चन प्रयोगान् हित्वा। अतोऽत्र परीक्ष्यं यत् किमेतादृशेषु प्रयोगेषु नियमोऽयं हातुं शक्यते वा न वा। अथवेदमत्र द्रष्टव्यं यत् किमेते शब्दाः समासरूपेण व्याख्येया उत प्रकृतिप्रत्ययरूपेण। एवं विधा केचन शब्दा अत्र निर्दिश्यन्ते—

**माध्यन्दिनम्**—शब्दोऽयं 'मध्यो मध्यं दिनण् चास्मात् (४।३।६० सूत्रे) इति वार्तिकानुसारं मध्यस्थाने मध्यमादेशेन भवार्थे दिनण् प्रत्ययेन च व्याख्यायते। अतो मध्ये भवमित्यर्थे माध्यन्दिनमिति प्रयोगः सम्पद्यते।

परमयं शब्दः पूर्वनियमानुसारं मध्ये भवं माध्यम् 'माध्यं चादः दिनम्' इति समासेन नास्ति शक्यसम्पादः किम्? समासे सति सरसिजादिवदत्राप्यलुग् विधातुं शक्यते।

परं दिनण् प्रत्ययस्तु पूर्वं नियममुत्क्रामति। सार्थकोऽपि दिनशब्दः निरर्थकवद् व्याख्यातो भवति। अन्वयव्यतिरेकविधिना 'दिनण्' इत्यस्य प्रत्ययत्वमपि दुःसम्पादं भवति। यथा पचत्यादिषु तिवादिप्रत्ययाः बहुषु शब्देषु समुपलभ्यन्ते न तथाऽयं दिनण्, अतः कथमयं प्रत्ययत्वेन निर्णयः। एतेनास्य साधुव्युत्पत्तिस्तन्मूलकोऽर्थोऽपि निगूहितो भवति।

यद्यधुनाऽपि दिनण् प्रत्यय एवाग्रहस्तर्हि ऋग्वेदे १०।१५१।५ संकेते प्राप्तः मध्यन्दिन शब्दः कथमन्वाख्येयः स्यात्? प्रत्ययस्य णित्वाद् सर्वदा वृद्धिप्राप्तेः। मम तु मध्यं चादः दिनञ्चेति मध्यन्दिनमित्यपि सर्वदा सुसम्पादम्।

**तिलतैलम्**—शब्दोऽयं 'विकारे स्नेहने तैलच्' इति वार्तिकेन विकारार्थे तैलच् प्रत्ययेन निष्पाद्यते। अतस्तिलतैलम्' इत्यस्य 'तिलस्यविकार' इत्यर्थः सम्पद्यते।

परं स्वतन्त्रोऽसौ तैल शब्दः विकारार्थे लोके सुप्रयुक्तः। अतस्तस्य तिलस्य तैलम्' इति षष्ठीसमासेनायं शब्दः साधुतरः व्याख्यातुं शक्यः।

यद्यपि तैल शब्दः न मूलतः विकारार्थकः, अपितु तिलस्य विकार इत्यर्थकः। अस्मिन्नर्थे समासकरणे तिलस्य तिलस्य विकारः' इत्यशोभनोऽर्थः

